45

रूपनाथोपाध्यायविरचितं

# श्रीरामविजय महाकाव्यम्



एम. ए. इत्युपाधिधारिणा

पण्डित श्रीगणपतिलाल झा शर्म्मणा संशोधितम्।

---

THE 

# RĀMA VIJAYA MAHĀKĀVYA

By

RUPA NĀTHA UPĀDHYĀYA

(Sanskrit)

*With Introduction by*

Pandit Nārāyana S'āstri Khiste Sāhityāchārya.



*Edited by*

PANDIT GANAPATILAL JHA, M. A.,

SADHOLAL RESEARCH SCHOLAR,

Govt. Sanskrit College, Benares.



1932.

# PREFACE.

The edition of Rām-Vijaya ( Mahākāvya ) which describes the heroic exploits of Srī Rāmachandra and his final victory over the Rākṣasas under Rāvaṇa, the king of Laṅkā, is based on the Devanāgarī transcript of a single manuscript of the work, obtained through the good offices of Pt. Indranath Jha from the family collection of the author. The original manuscript ( in Maithili ) in the hand of the author having not been traceable, I had to content myself with the transcript only which was available to me. The transcript was mostly accurate, except in certain places where the text had to be restored by comparison with and reference to the Sanskrit annotations which accompanied the poem all through. It is not unlikely that in these circumstances some misreadings have been left unnoticed. But it is to be hoped that with all its shortcomings the work will be welcome to the lovers of Sanskrit poetic literature.

Sarasvati Bhavana Library }
Benares. }

*Ganapati Lal Jha*

# उपोद्घातः ।

अथेदानीमुपक्रम्यते श्रीमद्रूपनाथोपाध्यायप्रणीतं श्रीरामविजयं नाम महाकाव्यं सम्मुद्र्य प्रकाशयितुम् । एतन्निर्माता श्रीमान् रूपनाथोपाध्यायः मिथिलालंकारभूतः तात्कालिकसकलविद्वत्कुलललामभूतः तर्कव्याकरणोभयमीमांसादिसकलशास्त्रप्रवीणः महाकविश्चासीदिति परंपरया वृद्धमुखेभ्यः श्रूयते । अयं च वैक्रमाष्टादशशताब्द्याश्चरमभागे अथवा ऊनविंशशताब्द्या आरम्भे समुत्पन्न ऊनविंशशताब्द्यामपि वर्तमान आसीदित्यनुमीयते । यतस्तस्य द्वितीयपुत्रो लक्ष्मीदत्तोपाध्यायोऽष्टाशीतिवयाः संवत् १९३० वैक्रमवत्सरे देहं जहाविति लक्ष्मीदत्तपुत्र चन्द्रदत्तकृततत्पितृप्रशस्तावुपन्यस्तमस्ति* । लक्ष्मीदत्तापेक्षया त्रिंशद्वर्षपूर्वभावित्वं रूपनाथोपाध्यायस्य अवश्यमभ्युपेतव्यमेव । तथा च पूर्वमुल्लिखितः समय एव बाढं साधितो भवति ।

---

* अष्टाशीतिसमे वयःपरिणते माहिष्मतीपत्तने  
श्रीरामेति मुहुर्वदन्नुदजहाद्देहं जले नार्मदे ॥  
भूमिग्रामनवेन्दुभिः परिमिते संवत्सरे वैक्रमे  
माघे मासि कुजे रवौ मकरगे पक्षे वलक्षेतरे ।  
पञ्चम्यामरुणोदये स तु तनुं त्यक्त्वा बुधः श्रीयुतो  
लक्ष्मीदत्त उदारकीर्तिरगमद्विष्णोः पदं निर्भयम् ॥

एतत्कुलपूर्वपुरुषाः सर्वे तु महापण्डिता इति तात्कालिकैः भूपालैः सबहुमानं स्वस्वविषयेषु समाहूताः परित्यज्य मिथिलां तांस्तान् जनपदान् स्वानिवासेन अलमकार्षुः । एतद्ग्रन्थप्रणेता श्रीमान् रूपानाथोपाध्यायोऽपि स्वपूर्वजसरणिमेवानुसरन् बहून् देशान् परिभ्राम्यन् अन्ते रेवाप्रवाहपवित्रे माहिष्मतीनगरे [ वर्त्तमानमंडलाभिधे ] निवासं कल्पितवान् । माहिष्मतीनगरागमनात् पूर्वं रामटेकाभिधनगरमधितिष्ठतोऽस्य नैकविधराजभिरुपायनीकृतं लक्षरूप्यकमूल्यकं वित्तं पश्यतोहरैः लुण्ठकैः 'पिण्डारा' इति प्रसिद्धैः बलादपहृतम् । तेन च द्रव्यापहारेण द्रव्यरक्षणचिन्तानिर्मुक्त आत्मानं भगवदुपकृतं मन्यमानः रेवारोधसि माहिष्मतीनगरे तपोऽनुतिष्ठन् न्यवसत् । एतस्य पुत्रेषु यज्ञदत्तलक्ष्मीदत्तवासुदेवोपाध्यायेषु लक्ष्मीदत्तवासुदेवोपाध्याययोः वंशोऽद्यत्वेऽपि जागर्त्ति । तीर्थप्रबन्धाख्यकाव्यकर्त्रा लक्ष्मीदत्तोपाध्यायेन च विहिता प्रकृतकाव्यस्य संक्षिप्तविवृतिरूपा काऽपि टीकाऽप्युपलभ्यते, किन्तु सा संपूर्णाऽनुपलब्धेति न प्रकाशिता । किञ्च लक्ष्मीदत्तात्मजेन चन्द्रदत्तोपाध्यायेन कृता स्वपितुः लक्ष्मीदत्तस्य पितृव्यस्य वासुदेवोपाध्यायस्य च गौरववर्णनप्रशस्तिरुपलभ्यते । तत्र मूलपुरुषश्रीरूपनाथोपाध्यायविषयेऽप्येवमुल्लिखितमस्ति—

'आसीन्मैथिलमण्डलीषु विलसद्विद्यावतामग्रणीः
माहिष्मत्यधिलब्धदेवमहिमः श्रीरूपनाथः कृती' इत्यादि ॥

एतावता श्रीरूपनाथोपाध्यायस्य सर्वशास्त्रावगाहिपा-

ण्डित्यं प्रतिभाऽतिरेकश्च स्पष्टं प्रतीयते । एतत्कृताः षड्ऋतुवर्णनप्रभृतयोऽप्यन्ये लघुप्रबन्धाः तत्तदवसरेषु निर्मिताः स्फुटकविताश्च लभ्यन्ते । श्रीमान् रूपानाथोपाध्यायश्च तपोऽनुष्ठानलब्धविभवः तात्कालिकनैकमहीपालमौलिलालितचरणः अध्यापितानेकशिष्यः दिगन्तविश्रान्तयशा लक्ष्मीं तृणाय मन्यमानः दीर्घजीवी पुत्रपौत्रादिपरिवारपरिवारितो नवत्यधिके वयसि माहिष्मत्यां नर्मदारोधसि शान्तात्मना पाञ्चभौतिकं देहं जहौ इति वृद्धमुखेभ्यः श्रूयते ।

अथ प्रकृतकाव्यमुद्दिश्य किञ्चिदालोच्यते—काव्यमिदं नवसर्गात्मकं महाकाव्यलक्षणोपेतं प्रतिसर्गसमाप्तौ श्रीशब्दघटितत्वात् श्र्यङ्कमिति व्यपदेशार्हं सुन्दरं वर्त्तते। अत्र च मृगयाऽर्थं वनं गतस्य दशरथस्य मुनिशापप्रसंगमारभ्य रावणवधानन्तरं भगवतो रामचन्द्रस्य राजसिंहासनारोहणं यावत् कथाभागो निबद्धो वर्त्तते ।

भगवतो रामचन्द्रस्य चरितमवलम्ब्य बहुभिः कविभिर्बहूनि काव्यानि नाटकानि च निबद्धानि सन्ति । तत्र कथाभागे समानेऽपि तत्तत्कविप्रतिभोट्टङ्कितो विशेष एव भावकानां चेतसि प्रतिक्षणविलक्षणां रमणीयतामुल्लासयति । यदि नैवं भवेत् रामचरितवर्णनपराणि बहूनि काव्यानि पिष्टपेषणमिव वैरस्यमापद्येयुः । इत्थंगते व्यतिकरे प्रस्तुतकाव्यमपि तन्निर्मातुर्महाकवेः श्रीरूपनाथोपाध्यायस्य प्रचुरप्रतिभाप्रभावेण नैकमहाकविक्षुण्णेऽपि कथाभागे कामपि चेतोग्राहिणीं कमनीयतां काव्य-

रसिकानां चेतसि समुल्लासयतीत्यस्य काव्यस्योपादेयता बाढं प्रतीयते । तथा हि—द्वितीयसर्गे रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्च मिथोऽनुगतत्ववर्णनप्रसङ्गे-'राममेव किल लक्ष्मणोऽन्वगात् शत्रुहा च भरतं तदंशजः । पूरुषं फलमिवात्मकर्मणो भूरुहं फलमिव त्वनेहसि' ॥ इत्यादिना हृदयग्राहिणी उपमा कविना प्रदर्शिता । दिग्दर्शनमिदम् । इत्थमन्या अपि मनोहरा उपमा अलङ्कारान्तराणि च काव्येऽस्मिन् स्थले स्थले जाग्रति । सुभाषितान्यपि बहूनि दृश्यन्ते काव्येऽस्मिन्, दिङ्मात्रमुदाहरामः—

'अर्थयन्ति नहि वारि वारिदाच्चातका अपि कृशास्तृषान्यतः'।

'उत्तमेष्वसफलाऽपि कामना श्रेयसी न सफलाऽधमेषु सा ।

एवमेव सुविचार्य साधवो नाधमेषु हि भवन्ति मार्गणाः' ॥

'आर्जनैः सुसमुपार्जितं तपो नाशमेति शपतां तपस्विनाम्' ।

इत्यादि ।

एवमेव महाकाव्यलक्षणान्यनुसरता कविनाऽस्मिन् काव्येऽपि वर्षावर्णनं शरद्वर्णनं यमकानुप्रासादिशब्दालङ्काराडम्बरो नैकविधच्छदःसन्दोहश्चेत्यादि हृदयग्राहिण्या सरण्या सुनिबद्धमास्ते । वर्षावर्णने च—

'त्वमवलोकय वीर सितच्छदान् घननिनादभयाच्चलितच्छदान् ।

स्वनिलयाय समुत्सुकमानसान् परिचितप्रमदप्रदमानसान्' ।

इत्यादि दिशा यमकपूर्वकं वर्षावर्णनं कृतमस्ति । इत्थमनेकगुणगणालङ्कृतेऽप्यत्र महाकाव्ये क्वचित्काठिन्यमप्रसिद्धप्रयोगबाहुल्यं

चान्तरान्तरा शल्यमिव वेधयति विशेषविदां चेतांसि। तथा हि— 'न कपयोऽकपयो गमितास्त्वया', 'गभीरा भीराभैः सलिलचरजीवैरसुगमाः', 'अत्रस्तरत्नमुकुटेन भासुरः', 'दशशिरोशशिरोहरणोद्यतः' 'दाक्षाय्यैरादयत् क्रव्यम्' इत्यादि । त्रिगुणात्मकेऽस्मिन् वैधसे सर्गे सर्वथा निरवद्यं न किमप्यवलोक्यते । प्रचुरगुणमीषद्दोषं वस्तु गुणवदित्येवाद्रियत इति हि सहृदयक्षुण्णोऽध्वा । तमेवानुसृत्य प्रकृतपुस्तकमालायां महाकाव्यस्यास्य प्रकाशनमङ्गीकृतम् । आशासे च निष्पक्षाः सदसद्विचारदक्षा विचक्षणा एतदवलोकनेन परमां मुदं प्राप्स्यन्तीति शम् ।

सरस्वतीभवनम्, काशी । } विद्वज्जनवशंवदः खिस्ते—इत्युपाख्यो नारायणशास्त्री

॥ श्रीः ॥

# श्रीरामविजयं नाम महाकाव्यम्

## श्रीरूपनाथोपाध्यायप्रणीतम् ।

---

श्यामां श्यामाम्बुजदलदृशं मुक्तकेशीमवस्त्रां
घ्राणायुक्तस्तनपरुचिरश्रोत्रभूषे दधानाम् ।
शीर्षासी चाऽभयमथ वरं भावये भावसिद्ध्यै
शावाकारत्रिपुररिपुहृत्संस्थितामुग्रदन्ताम् ॥ १ ॥

रामो राजीवनेत्रो रघुकुलतिलको राजराजीकिरीट-
व्यासक्तानेकरत्नप्रखरकरकरद्योत्यमानाङ्घ्रिपद्मः ।
सम्भिन्नानेकदैत्यप्रसभाजितबलारातिमुख्यासुरद्विट्-
पौलस्त्यश्चापबाणोल्लसदमलकरः स्यान्मदीयः सहायः॥२॥

निबन्धाः सम्बद्धाः कृतिकविभिरम्या बहुमताः
प्रकाशन्ते क्षोण्यां तदपि मम का हानिरभवत् ।
क्षपायां छन्नायां द्विजनृपतितारादिकिरणैः
स्वभाभिः खद्योताः किमपि न विकाशं विदधते ॥ ३ ॥

अयोध्या ऽयोध्यास्ते शिवसखदिशायां क्षितितले
पुराणां सप्तानां धुरि गणनया प्राप्तमहिमा ।
अमर्त्या मर्त्यानां जननमिह वासं कृतवतां
समीहन्तेऽन्येषां किमु तनुभृतां तृड् गुरुतमा ॥ ४ ॥

अलङ्घ्या लङ्घ्याज्ञावशितधरणीधारिकरिणाऽ
रिणा पौलस्त्येनोद्धृतभुजधृतश्वेतगिरिणा ।
कलापूर्णैः पूर्णैर्निजगुणगणैर्मानवगणैः
श्रिता शिल्पागाराश्रिततरधरापालसरणिः ॥ ५ ॥

चतुर्वर्णैर्वर्णैषितसुकृतशूरैः परिवृता
मनोवंश्यैर्भूपैर्नयनियमविद्भिरविता ।
चतुर्द्वारैर्द्वारैरिव परिलसच्चापसदृशै-
श्चतुर्णामर्थानामनुपमतमानां परिगता ॥ ६ ॥

सरय्वा रज्वा वा विमलजलमध्यप्लुतवतां
नृणामंहः कृष्टं निखिलमिह जन्मार्जितमपि ।
समं सर्वे सर्वेश्वरहरिपदं प्रापुरमरै-
र्दुरापं ते भूयः कथमिरतथा चक्रिवपुषः ॥ ७ ॥

गृहे रम्या रम्यामरपतिगृहादप्यति वरैः
सुधालिप्तैरत्नाखचितवलभीकुड्यकाशिलैः ।
विचित्रैश्चित्रैर्या कनकमयरङ्गादिविकृतै-
र्नृणां देहीत्युच्चैर्गलितवचनैश्चारुवपुषाम् ॥ ८ ॥

तुरङ्गा रङ्गाम्याः सदननिचये चात्र विलस-
न्त्युदग्रा मातङ्गाः कटगलितदानाम्बुनिकराः ।
इह क्रय्याऽक्रय्या वरमणिगणा हट्टविपणौ
प्रकाशन्ते कान्त्या तुलितहरिदश्वादिकिरणाः ॥ ९ ॥

यदारामे रामेहिततृणजले केलिधरणी–
धरो दीव्यत्युच्चैः परमरमणीयागनिवहः ।
स्फुरद्रत्नोरत्नोद्गतकिरणसंच्छन्नशिखरः
स्रवत्पाथोधारामुषितजनताखेदनिकरः ॥ १० ॥

जलाधारा धाराधरगलितनीरानुपचिताः
करालैर्नक्राद्यैरिव खलगणैः क्रूरहृदयैः ।
गभीराभीराभिः सलिलचरजीवैरसुगमाः
प्रसन्ना यत्रासन्सरसिजसमापन्नसलिलाः ॥ ११ ॥

समुद्रा मुद्राणां विधुमिहिरबर्हिर्दिविषदां
जना यस्यामासन्नगणितसुपर्वक्षितिरुहाः ।
अचिन्ताश्चिन्तादावभिलषितदातर्यमनसो
मणौ तेषां ते के धरणिपतयो ये परभुवाम् ॥ १२ ॥

अगम्यागम्यानां वृजिनपटलं यत्र सुदृढं
विमुक्तस्तस्मात्स्यात्प्लुतनरवरो गोप्रतरणे ।
सुधाराधारास्यो नयनजितराजीवमहिमा
चतुर्बाहुः पीताम्बरकलितदेहच्छविधरः ॥ १३ ॥

महामायामायाद्भुतजवनिकाच्छन्नहृदया
यदावासानास्थाविहितमनसोऽन्यत्र रुचयः ।
समीहन्ते हन्तेषदपि न हि यत्रास्ति कुशलं
तदेवेमे लोका विधिविहितभाग्या इह किल ॥ १४ ॥

वसन्तोऽसन्तोषं गतविषयतृष्णाः प्रमुदिता
हरन्त्युच्चैर्यस्यां परिषदि लसन्तस्तनुभृताम् ।
विरागा रागाद्यैर्मुषितमनसां गीतयशसः
कथाभिः पुण्याभिः परममहसो दानवरिपोः ॥ १५ ॥

प्रजानाथानाथारुचिरतरगाथाः सहृदया
बभूवुर्यस्यां वै रविकुलभवा दीनमनसाम् ।
कलापालापाद्यैर्मुदितसुधियः ख्यातयशसः
कलाभिः सम्पूर्णा बलजितविपक्षप्रतिभटाः ॥ १६ ॥

स्वरामारामावैभवतुलितयक्षाधिपतयः
सदा यागासक्ताः करकलितभूपालमणयः ।
क्रियादक्षा दक्षाध्वरहरनमस्याविधिरता
विधिज्ञा दातारोऽवनिमणिसुवर्णाचलगवाम् ॥ १७ ॥

नृपालोऽपालोको विगतसुकृतेषु प्रतिदिनं
बभूवाम्यस्तस्यां दशरथ इति प्रागतिरथः ।
यशोधामा धामावरनृपतिमालस्य नृपते-
रजस्य प्रोद्वाहे विजितनृपचक्रस्य तनयः ॥ १८ ॥

गताशाताशादेर्मुनिवरवशिष्ठादुपनयं
स रेजे सम्प्राप्तः कृतनिकषमार्गो मणिरिव ।
सुधर्मा धर्मार्थावपि परिचरञ्छस्त्रनिचयं
कलाविद्यास्तस्मादपि परिपठन्मन्त्रसहितम् ॥ १९ ॥

पुनीतेऽनीतेः स्म प्रचलमनसो वीतसुकृतान्
सुनीत्या मर्त्यान् यः सदयहृदयो भूपतिवरः।
धुनीते नीतेः स्म क्षुभितहृदयान् भीतजनकै-
र्वचोभिर्नीतिज्ञः परमरमणीयव्यवहृतिः॥ २० ॥

नयज्ञो यज्ञोतीर्व्यापितपुरुरायो बहुमता
मुहुश्चक्रे भूपो धरणिसुमनःस्सात्कृतभुवः।
पुरोधा रोधाय प्रचुरतरविघ्नस्य यशसो
विभूत्यै यत्रासीद् द्रुहिणतनयः श्रौतकुशलः॥ २१ ॥

सुताभिस्ताभिर्यो मलयनृपतेः कोशलपते-
र्वयोभीरम्याभिः कृतपरिणयः केकयपतेः।
बभासे भासेन्द्रादपि ललितकायः सुरनदी-
स्वराकालिन्दीभिस्तिसृभिरिव कीलालनृपतिः॥ २२ ॥

रताभिस्ताभिर्यस्तिसृभिरबलाभिः परियुतः
सुकायाभिः कान्त्या तुलितसुरकान्ताभिरधिभूः।
प्रयागो यागोहस्तिसृभिरमलाभिः सुमिलितो
नदीभिः पुण्याभिस्तपनतनयाद्याभिरिव सः॥ २३ ॥

अलक्ष्ये लक्ष्ये च स्वनपरिचयात्तत्र चपले
पुरस्ताद्व्यापाराद्विशिखपरिपातस्य नियमात्।
सकोपेऽकोपे वा तनुनयनकर्णादिकलनात्
सदाभ्यासं दत्ते तदगमदसौ साथ मृगयाम्॥ २४ ॥

जहाराहारादौ कृतनियममासक्तमनसं
हरिद्वर्णैर्वस्त्रैः पिहिततनुमाखण्डलरुचिम् ।
वहन्तं हन्तव्यप्रियकगणपृष्ठेऽर्पितदृशं
विदग्धा क्षोणीशं परमरमणीयेव मृगया ॥ २५ ॥

वराहो राहोर्द्विट्सदृशवदनेन क्षितिभुजा
प्रविद्धो बाणेनोद्दलितजघनेनात्ततरुणा ।
प्रहन्ता हन्तारं चालितुमपि नालं यदि तथा
पृदाकुर्मन्त्रेणोन्मथितहृदयो दुःखमभजत् ॥ २६ ॥

मृगेन्द्रेऽगेन्द्रेभोद्दलनपरिलब्धोरुयशसा
नखेनोदग्रेणार्जितमहासि भूपालमणिना ।
महिम्नाहिम्नातोऽप्ययमथ किलेति प्रमदतः
प्रजह्रे मानार्थी स्वसममहिमानं न सहते ॥ २७ ॥

स खड्गे खड्गेनोल्लसिताशितधारेण तरसा
तुरङ्गे नागेत्यप्रकृतिकठिने सम्प्रहृतवान् ।
कुरङ्गे रङ्गेनोज्ज्वलदमलदेहेन धनुषा
शरं संयोज्यैनं द्रुततरगतौ मुक्तमकरोत् ॥ २८ ॥

स भल्ले भल्लेन प्रतलदृढमुष्टिर्नरपति-
स्तुरङ्गादानम्य प्रचलतरपादादतिजवात् ।
प्रहारान् हारावान् कृतवति मुहुश्चाथ कृतवान्
समभ्यासे मर्त्ये पटुतरमतौ चित्रमिति किम् ॥ २९ ॥

मृगा नागानाद्यैरपहृतधियस्तेषु सदयः
प्रहारं यश्चक्रे धरणिपतिरप्यायुधधरः ।
तृणादे नादेनाकुलितहृदये शस्त्ररहिते
गलत्केशेऽवेशे प्रहरति रिपौ नैव हि महान् ॥ ३१ ॥

तरक्षो रक्षोभो विवृततरमास्यं कृतवतः
प्रहर्त्तुं राजानं दशरथमभिप्रद्रुतवतः ।
स चक्रे चक्रेणोल्लसितशितधारेण वपुषो
जरासन्धस्यासौ पवनज इवाजौ द्विशकलम् ॥ ३१ ॥

स पञ्चास्यश्चास्यप्रथितकरदाक्षिण्यमहसः
प्रहारायोत्तस्थावतिपवनवेगो बलयुतः ।
स राजा राजानं शरसमुदयैर्लाघवबला-
न्मृगानान्तंश्चावित्सद्दशमकरोद्रोषसहितः ॥ ३२ ॥

अथ क्रीडन् क्रीडन्नवधि मृगयायां मृगशशान्
वराहादीन् भूपश्चरममिव भास्वान् क्षितिधरम् ।
नदन्तो दन्तोग्रा इभसमुदया यत्र वितता
भ्रमद्भृङ्गारावं सपदि तमसातीरमगमत् ॥ ३३ ॥

कृताहारो हारोल्लसिततरवक्षा नरपतिः
समाक्रान्तः शय्यां शुचिवसनसञ्छादितनवाम् ।
सनिद्रो निद्रोत्थानवरसुखसम्पद्विगलित-
श्रमो ध्यानेनाभूत्परमसुखमग्नो मुनिरिव ॥ ३४ ॥

अजस्याजस्यात्मा विहितनिजदेवस्तुतिजयो
मुहूर्त्ते सम्बुद्धो वनजगजशब्दग्रहरवैः ।
अनीरे नीरेण प्रचुरतरशब्दं प्रविशता
घटे द्वैप्यभ्रान्त्या ध्वनिगमिषुमभ्रान्तममुचत् ॥ ३५ ॥

अहो धातर्धातर्गदितमिदमाकर्ण्य नृपति-
र्गतस्तस्यान्वेषी शरहतमपश्यन्मुनिसुतम् ।
ववन्दे वन्देनोज्झितवरमहिम्ना क्षितिभुजा
विलेपेऽथोपादः श्रवणमुनिवर्यस्य निकटे ॥ ३६ ॥

स भूपो भूपोक्तोचितरहितकर्मा मुनिवरं
समूचेऽयं देही किमथ कुरुतादाह स नृपम् ।
न हन्ता हन्तासि द्विजमिति विषादं गतदृशो-
र्गमोमापित्रोर्मानय नृप सकाशं गुरुतृषोः ॥ ३७ ॥

उरीकृत्याकृत्यापरमरमणीयोऽपि गतभा-
स्तथेत्यूढ्वा निन्ये सशरमृषिसूनुं जलयुतम् ।
दृशा हीनौ हीनौ गदितुमपि यत्रासतुरिनः
सुतेति क्रोशन्तौ चरणहतशुष्कच्छदरवैः ॥ ३८ ॥

न पुत्रः पुत्रस्य कथनकरशीलो दशरथः
प्रवध्यः पापीयांश्चरणयुगयोर्वा निपतितः ।
प्रदण्ड्यो दण्ड्योक्तोग्रतरगुरुदण्डेन सुभृश
तयोरग्रेऽवादीदहमिति नृपः श्यानवदनः ॥ ३९ ॥

जलाहारो हा रोदनगतमते वां समुचितो
विधेयः पश्चान्मे मुनिकथितदण्डः स सपदि।
सुतस्तेऽतस्तेजोहृत इति विषादं न कुरुता-
दसारे संसारे नियमितसुखः कोऽन्धमवदत् ॥ ४० ॥

सुमन्दो मन्दोक्तो बहुविलपतोः स्त्रीपुरुषयो-
र्गुणान् स्मारं स्मारं सुतवपुषि विश्रान्तकरयोः ।
स शल्यं शल्यं वा हृदि निहितमुद्धर्तुमसकृ-
त्तयोरेकेनाशूच्छ्वसितहतदयेनाथ मुनिना ॥ ४१ ॥

समालोक्यालोक्याग्र्यवदनसुधांशोर्मुनितनू-
द्भवस्यारेभेऽसौ शरमुरसि मग्नं नृपवरः ।
समुद्धर्तुं धर्तुं तमथ मुनिपुत्रो जिगमिषुः
परं लोकं प्राप्तुं हरिपदमसूनूर्ध्वमनयत् ॥ ४२ ॥

अयाचद्याचन्तं श्रवणतनयादप्यपचितिं
करिष्ये त्वां नीत्वा नगरमधिकां दारसहितः ।
प्रकामं कामं ते विदधदिति भूपं मुनिवर-
श्चितां योग्यां कार्यां पवनसुखयुक्तां हि भवता ॥४३॥

सदारोदारोऽथ श्रवणमवरोप्य क्षितिभुजा
कृतायां चित्यायां करनिहितनेत्रोत्थसलिलैः ।
वियोगे योगेन त्वमपि तनयस्य क्षितिपतिं
विनश्येः शप्त्वेति स्वयमपि विवेशाशु स मुनिः॥४४॥

स मेने मे नेति प्रमददतनूजन्मरहितः
स शापः किन्त्वाशीर्हृदयकलितार्थो बुधवरः ।
समायान्मायातः पुरुष इव मोदं क्षितिपति-
र्मुदाक्रान्तस्वान्तः सपदि तमसातः पुरवरम् ॥ ४५ ॥

स यज्ञे यज्ञेशं विविधफलदातारमसकृ-
द्वशिष्ठस्याभ्यर्णे गदितुमिति यष्टुं दशरथः ।
प्रयातो यातोरुप्रमदहृदयस्तस्य विपिनं
घनच्छायं वृक्षैः फलकुसुमभारेण नमितैः ॥ ४६ ॥

तमालैर्मालैर्जाद्विटपनिकरोद्यत्कुसुमितैः
प्रियालानां जालैः कुरबकवनोद्भासिकुसुमैः ।
रसालैः शालैष्यद्भ्रमरनिचयैः कोकिलपत-
द्रुतैः कान्तैः शान्तैः सहरिहरिणानां समुदयैः ॥४७॥

अपुष्पात् पुष्पादागतफलचयैर्वृक्षनिचयै-
र्गजैः सिंहैर्नागैर्नकुलवृषदंशाखुमहिषैः ।
स्वभावाभावाद्वै विहितसखिभावैर्जलचरैः
स्थलस्थैः सद्भिर्वा समुचितसदाचारनिपुणैः ॥ ४८ ॥

वशिष्ठं शिष्टं तं सपदि समुदीक्ष्य क्षितिपती
रथाद्दूरात्तस्मिन्नथ समवतीर्य क्षितितले ।
पपाताऽऽपाताऽस्या भुव उरुयशास्तच्चरणयोः
स्वभावात्कालुष्यापहतिकरणेनाप्तयशसोः ॥ ४९ ॥

तमुत्थामुत्थाप्य प्रचुरदयया घ्रातसुशिराः
कराभ्यां लम्बाभ्यां नयनकमले वारिकणिकाम् ।
विवस्वान् वस्वाल्या कमलमिव कान्त्या विधिसुतः
समाकृष्याश्लिष्यद्गृहनिहितभूपाङ्कमुरसा ॥ ५० ॥

उपान्तेऽपां तेने निचयमसकृत्सारसदृशो–
र्वृषीमध्यासीनो विधितनयदत्तामथ नृपः ।
उदन्तान् दन्ताद्यक्षरनियमितस्थानपटलैः
प्रवक्तुं नाशक्नोन्मुनिरिव परानन्दनिभृतः ॥ ५१ ॥

मुनीन्द्रोऽनिन्द्रोनं दशाविजयाविख्यातयशसं
प्रवक्तुं तं भूपं प्रहसितमुखोऽवोचदनघम् ।
प्रसन्नासन्नायं नृपनयविदं भूरिमहसं
प्रशंसन्तः सन्तः प्रमुदितमनस्काः समभवन् ॥ ५२ ॥

किमप्राप्यं प्राप्यं तव भवतु वर्तेत मनसि
वद स्वान्ते लज्जां परिहर मुदं याहि नृपते ।
अकामं कामं वा कथयति गुरूक्तं हि सकलो
बभाषे भूमीशो वचनमथ नैजं हितकरम् ॥ ५३ ॥

अनन्ताऽनन्ताहेः शिरसि निहितात्मा मम वशे
समस्ता वर्तेत क्षितिपमणयोऽमी हि करदाः ।
अनल्पानल्पार्घ्याः प्रवरमणयो मे वशतया
तथापीयं सम्पत्सुखयति न मां पुत्ररहितम् ॥ ५४ ॥

स पुत्रे पुत्रेष्टिं वरतनुजजन्मप्रणयिनीं
दिदेशास्मै राज्ञे परमसुखदात्रीं मुनिवरः ।
प्रपन्नापन्नाशो कृतविमलबुद्धिः समुच्चितैः
कृतातिथ्यो वन्यैः फलसलिलनीवारकुसुमैः ॥ ५५ ॥

प्रसादात्सादान्तो विधिसुतमुनेस्तस्य नृपतिः
पतिं शान्तायास्तं मुनिममलमानेतुमनसः ।
विनम्यानम्यार्च्यौ कमलसुषमामोषिचरणौ
पुरीं स्वीयामायाद्घनपतिपुरीतोऽप्यतिवराम् ॥ ५६ ॥

प्रयातो यातोरुप्रबलमदकामादिरजभू-
र्मुनिं शान्ताकान्तं सुतसवविधिज्ञं मुनिवरः ।
विनेता नेतारं श्रुतिविहितकार्यस्य नगरी-
मयोध्यामानाय्य द्रुततरमथोत्साहवशतः ॥ ५७ ॥

क्षितीशोऽतीशोऽथ प्रवरमहसोत्थाय चलितो
मुनीन्द्रौ तौ दृष्ट्वा कविसुरगुरू वैकभगतौ ।
सपर्यां पर्यासां सलिलमधुपर्कादिसहितां
तयोः कृत्वा मेने स्वमथ कृतकृत्यं दशरथः ॥ ५८ ॥

मुनी तौ नीतौ च स्मृतिनिगमशास्त्रेषु कुशलौ
नृपो वृत्वा तस्थौ निगमविदुषोऽन्यानपि मुनीन् ।
उदारैर्दारैस्तौ कृतसलिलपात्रं मुनिवरौ
समारम्भेते स्माऽध्वरवरमजस्येव विततम् ॥ ५९ ॥

मखस्थाः स्वस्था ये हरिहयमुखास्ते दिविषदः
पुरोडाशं जग्ध्वा परमुदमवापुः स्वहृदयैः ।
अनन्तानन्ताद्याः क्षितितलगतास्तेऽपि भुजगाः
परे ये भागार्हा मुदितमनसस्तेऽपि शतशः ॥ ६० ॥

धनाशानाशाय प्रचुरतरदारिद्र्यमुषित-
क्रियाणां मर्त्यानां रविकुलविभूत्यै समभवत् ।
विभागाभागाय त्रिदिववसतां भूदिविषदां
महोन्नत्यै भूत्यै दशरथमहीपस्य मखराट् ॥ ६१ ॥

सुवित्ते वित्तेशप्रतिमनृपतेः सूनुसवने
मुनीन्द्रा देवेभ्यो जुहुवुरनले विस्तृतकुशे ।
स्वमन्त्रैर्मन्त्रेद्धे विततमहसो हव्यममलं
वधूभिः संदृष्टं कुशमयकटीदामभिरलम् ॥ ६२ ॥

कृशानुः सानूच्चं हविरथ सुगन्धेन सहितं
जघासोच्चैरेकं न पुरु वसुगन्धैरसुभृताम् ।
असह्याः सह्याद्रेः शिखरतुलिताः पातकतती-
र्जहारोद्धूमेनोद्धिहितपरिसम्पूर्णहवनात् ॥ ६३ ॥

विशुद्धेः शुद्धेन प्रचुरहविषा तस्य नृपतेः
सुतेष्टाविद्धाग्नेः सवपुरुष आविः समभवत् ।
प्रकाशाकाशार्द्धप्रगतमहसः पायसचरुं
गृहीत्वा पाणिभ्यां सुतजननबीजं वररुचिम् ॥ ६४ ॥

स राजाऽऽराजाद्यैर्नमितचरणाम्भोजयुगलान्-
मखाध्यक्षात्तश्चार्चितवरधनर्षिर्द्विजवरः ।
स भूपो भूपोनास्तिसृषु वनिताभ्यामथ ददौ
समं भागं ताभ्यामलभत सुमित्रापि शकले ॥ ६५ ॥

कौशल्या राजपत्न्यो युगपदधुरथो गर्भमिन्दुप्रकाशं
कैकेयी ताः सुमित्रा नृपकुलततये लोकपालानुभावैः ।
आविष्टं नीरजानां पटलमिव महाद्वीपवत्यश्च वर्षा
मेघानां वृन्दमुद्यत्सकलजनहितं श्चालयं शोभमानाः६६

इति श्रीरामविजये महाकाव्ये श्चङ्के श्रीरूपनाथोपाध्याय-
कृतौ गर्भाधानो नाम प्रथमः सर्गः ॥ १ ॥



# द्वितीयः सर्गः ।



चैत्रिकेऽथ धवले पुनर्वसौ शोभनेऽधिनवमि स्त्रिया ग्रहैः ।
पञ्चभिर्नरविगैः श्रितोच्चगैर्ज्येष्ठया प्रसुषुवे सुतो दिने ॥१॥
पद्मपत्रनयनश्चतुर्भुजो जानुलम्बिसुभुजोल्लसद्वपुः ।
शङ्खचक्रकमलं गदां दधत्कौस्तुभेन वनमालया लसन् ॥२॥
कुन्दकोरकरदो दरस्मितैरुल्लसद्दशनवस्त्रमण्डनः ।
नासिकाजिततिलप्रसूनकः कुण्डलच्छविलसत्कपोलकः॥३॥
कामचापमदहारिसुभ्रुवौ सन्दधत्तिलकशोभिभालकः ।
स्निग्धवक्रशितिकेशहस्तकोऽत्रस्तरत्नमुकुटेन भासुरः ॥४॥
चारुपीतवसनोपरिस्खलत्काञ्चिदामपरिशोभिमध्यमः ।
पद्ममध्यरुचिमोषिपत्कजो नूतनाग्र्यशतपर्विकाछविः ॥५॥
आतपत्रकुलिशाब्जकेतनैरङ्कुशेन च तथोर्ध्वरेखया ।
लाञ्छितेन चरणद्वयेन संलक्षितोऽञ्जितनरर्षभाश्रिणा ॥ ६ ॥
केकयेशसुतया सुतस्ततोऽसूयताऽसितमणिच्छविस्ततः ।
गौरकान्तिसुतयोः सुमित्रया युग्ममंशयुगलस्य भक्षणात् ७॥
कोशलेशसुतया समं नृपस्तादृशं सुतमवेक्ष्य विस्मितः ।
बाष्पगद्गदगिरा समस्तवीद्धेतुनात्तपुरुषर्षभाकृतिम् ॥८॥

निर्गुणोऽपि गुणवान् भवान् विभो सृष्टिपालनविनाशकर्मभिः।
ब्रह्मविष्णुशिवनामभिः पृथक् केवलोऽपि सपदि प्रतीयते ॥९॥
चेतसा सह यतो निवर्तते भारती तमनवाप्य मादृशः ।
स्तोतुमिच्छति कथं किमात्मकं त्वामतीतवचसं हृदा सह १०॥
रूपमीदृशमलौकिकं प्रभो संहरस्व जनसौख्यकारि यत् ।
तद्गृहाण रुचिरं महात्मभिर्ध्येयमम्बुजदलाभदृग्घरे ॥११॥
इत्युदीरितमुदारविक्रमः संनिशम्य शयनीयमध्यगः ।
प्राकृतः शिशुरभूत्स्वरोचिषा सूतिकालयमलं प्रकाशयन् १२॥
आगतेन तनुजेन वेधसो जातकर्माणि कृते पुरोधसा ।
तेऽर्भकाः समधिकं बभुस्तथा शाणमुक्तमणयो यथा रुचा १३॥
योगिहृत्कमलवासतो मुनी राम नाम विदधे विधानवित् ।
ज्यायसो गुणगणैर्गरीयसो भूपतेस्तनुभवस्य कालवित् ॥१४॥
आत्मनि क्षितिभरार्पणाद्दधौ नाम चेति भरतोऽथ मध्यमः ।
लक्ष्मणश्च शुभलक्षणैर्लघू शत्रुसूदनतया च शत्रुहा ॥१५॥
यादृशो नृपवरस्य सम्पदो यादृशी च मनसोऽप्युदारता ।
यादृशं कुलमहस्करोद्भवं तादृशं धनमदान्महामतिः ॥१६॥
केवलं नरपतेर्गृहाङ्गणे नानकास्तनयजन्मसूचकाः ।
ताण्डवेन सह वारयोषितां नेदुरध्वनि सुपर्वणामपि ॥१७॥
नन्दनादिकुसुमानि निर्जराः संववर्षुरलमुत्सवेरिताः ।
संप्रसेदुरमला दिगापगा मन्दमन्दमथ वायवो ववुः ॥१८॥

भव्यसूचिशकुनं जगत्त्रये प्रादुरास रघुनाथजन्मनि ।
प्रापुराशु सकला जना मुदं केवलं दशमुखादिकं विना ॥१९॥

राममेव किल लक्ष्मणोऽन्वगाच्छत्रुहा च भरतं तदंशजः ।
पूरुषं फलमिवात्मकर्मणो भूरुहं फलमिव त्वनेहसि ॥२०॥

राम राम जनकः प्रतीक्षते स्वानुजैः सह समेहि सत्वरम् ।
प्रातरेव कृतभोजनोऽनया क्रीडयालमिति चाम्बयोदितः॥२१॥

नाजगाम जननी तमन्वगात् तां विलोक्य स भृशं पलायत ।
धूलिकर्दमकरोऽनुजैः सह संनिपत्य पितुरङ्कमाविशत् ॥२२॥

क्रीडति स्म परकेलिसाधनैर्वस्तुभिः सुसमतीतबालकः ।
विश्वमेतदभवद्यदिच्छया सोऽपि नृत्वमधिगम्य बालवत् ॥२३॥

हर्षितं च पितरं समातृकं चक्रिरे प्रचलकाकपक्षकाः ।
कुण्डलादिपरिशोभिविग्रहास्तेऽर्भकाःकलवचोभिरन्वहम् २४॥

वृत्तचूडविहितोपनीतकाः ब्रह्मचर्यमदधुः पुरोधसा ।
तेऽर्भका मुनिवरात्प्रपेदिरे चास्त्रशस्त्रनिचयं समन्त्रकम् ॥२५॥

ब्रह्मसूनुरपि रामगौरवादाप दुर्लभतया कृतार्थताम् ।
मन्यते स्म परमार्थवादिनामादिभूतमिव स स्वमात्मवित् ॥२६॥

एकदा दशरथं सदःस्थितं कौशिकोऽथ शिरसा जटा दधत् ।
आजगाम मृगचर्मणा वृतो देहबद्ध इव धर्म उज्ज्वलः ॥२७॥

पाद्यमर्घमधुपर्कगा नृपः स्वागताय मुनये महात्मने ।
तं समर्प्य कमनीय आसने संनिवेश्य समपूजयन् मुदा ॥२८॥

निस्पृहा अपि भवादृशा मुने नागमो हि महतामकारणः ।
आश्रवोऽथ विदधातु किं तव ब्रह्मसाद्रघुभुवां हि सम्पदः ।२९॥
भाग्यतो मम भवादृगागमो जात एव समवैमि कौशिक ।
वारिदो हि समये प्रदृश्यते कर्षुकश्रमहराय सर्वथा ॥३०॥
राघवं कुलमिदं महात्मना पादपद्मरजसा पवित्रितम् ।
आगतेन भवता ममालयमित्यवोचदजनन्दनो मुनिम् ॥३१॥
एवमेव पृथिवीपतिं तदा वादिनं कुशिकनन्दनोऽवदत् ।
अन्वयोचितमिदं वचस्तव ह्यर्थिता न रघवः पराङ्मुखाः ॥३२॥
त्वादृशं क्षितिपतिं महीपते याचकाः समपहाय कं नृपम् ।
अर्थयन्ति न हि वारि वारिदाच्चातका अपि कृशास्तृषान्यतः३३
उत्तमेष्वसफलापि कामना श्रेयसी न सफलाऽधमेषु सा।
एवमेव सुविचार्य साधवो नाधमेषु हि भवन्ति मार्गणाः ॥३४॥
विघ्नहेतुविनिवारणक्षमे नायके न मुनयः शपन्ति हि ।
आजनेः सुसमुपार्जितं तपो नाशमेति शपतां तपस्विनाम्३५।
राक्षसा मम मखान्तरायकं कुर्वते क्षितिप पर्वपर्वणि ।
रक्षणाय सवनस्य कामये राममात्तधनुषं सलक्ष्मणम् ॥३६॥
ब्रह्मकल्पविधिसूनुना समं मन्त्रिणा समनुमन्त्र्य देहि मे।
राममाशु मनसा प्रसेदुषा नान्यथा हि कुशिका वयं मताः३७।
कौशिकास्त्रमिव कौशिकेरितं संनिशम्य वचनं क्षितीश्वरम्।
ओमनोमिति न वक्तुमीश्वरं संजगाद विधिसूनुरर्थवित् ३८॥

कल्पपादपसमोऽनुकूलितस्तीव्रवह्निसदृशो विरोधितः ।
मान्य एव मुनिरेष सर्वथा प्राणिभिर्वसुसुतासुदारकैः ॥३९॥
कौशिकेन सह राघवं मुदा प्रेषयस्व नृप लक्ष्मणान्वितम् ।
भाविकार्यगुरुताबलेन वै वाक्यतो मम पुनर्विशेषतः ॥४०॥
इत्थमब्जजसुतेन राघवो बोधितः कुशिकजे समार्पयत् ।
राघवौ प्रियतमावपि स्वयं साधवो हि परकार्यसाधवः ॥४१॥
तौ नृपोक्तिपरिबद्धकक्षकौ मस्तकोपरिलसत्किरीटकौ ।
तूणचापसहितौ विरेजतुर्लोकशोकमिव हर्तुमुद्यतौ ॥४२॥
तौ पितुर्विहितपादसन्नती प्रापतुर्विविधमङ्गलाशिषम् ।
नेत्रजैः सपदि वारिभिर्हतौ रक्षसामिव कृताभिषेचनौ ॥४३॥
अङ्घ्रयः समुपविश्नतस्तयोः श्यामगौरवपुषोरुपानहः ।
रेजिरेऽश्मचयकण्टकैः समं किं निबद्धकवचा युयुत्सवः॥४४॥
आज्ञया पितुरथानुजग्मतुः कौशिकं विधृतबाणकार्मुकौ ।
राघवौ शशधरानुगामिनौ दानवारिगुरुभार्गवाविव ॥४५॥
तौ बलातिबलयोः प्रभावतो विद्ययोः कुशिकनन्दनात्पथि ।
प्राप्तयोरयनजः श्रमस्तृषा क्षुच्च नाप सुकुमारकौ क्वचित् ॥४६॥
पश्य राम किल ताडकावनं सज्जितो भव मुनीरितिस्त्विति ।
लक्ष्मणेन सहितः स कार्मुकं ज्याधिरूढमकरोद्रघूद्वहः॥४७॥
ताडका गिरिदरीसमानना ताडवृक्षजघना कृशोदरी ।
निम्ननेत्रकुहरा कपालिनी कृत्ययाऽथ सदृशी व्यदृश्यत४८॥

कालकूटजननीव मारिका वाडवाग्निभगिनीव दाहिका ।
अन्तकस्य दुहितेव दुःखदा मातुलीव भुजगस्य घातुकी ४९॥
वृश्चिकस्य ललनेव मर्मदा शौक्तिकेयसहजेव शोकदा ।
क्ष्वेडमातृभगिनीव मोहदा व्याघ्रपित्नवरजेव दारिका ॥५०॥
तादृशी रघुवरेण ताडका सूर्यजातिथिरकारि पत्रिणा ।
नव्यनव्यपरिभोगलिप्सया व्याकुलेव महता कृपालुना॥५१॥
ताडकारिरथताडकावनं संविशोध्य मुनिलक्ष्मणान्वितः ।
वेदघोषयुतमाश्रमं मुनेर्ब्रह्मलोकमपरं ययाविव ॥ ५२ ॥
कौशिकं मुनिमुवाच राघवः साध्यतां सह सवो महर्षिभिः ।
किङ्करेण भवतां धनुष्मता रक्ष्यमाण इषुभिः समन्ततः ॥५३॥
नोदितो रघुवरेण कौशिकः सप्ततन्तुमृषिभिः समादधात् ।
पुण्य आह्नि विधिवत् विधानवित्सम्भृतोपकरणप्रयोगिभिः५४।
सास्थिभिः किल सुबाहुमुख्यका यज्ञविघ्नमथ कर्तुमुद्यताः ।
इन्द्रगोपसदृगस्रबिन्दुभिः प्रोद्ववर्षुरसुरा विहायसः ॥५५॥
सायकैरसुरसार्थनाशकैर्मण्डपं समवृणोदनन्तरम् ।
शिक्षया गुरुगुरोरधीतया शस्त्रमन्त्रविदुषो रघूत्तमः ॥५६॥
द्वीपमन्यमनयत्स मारिचं बाहुभिन्नमकरोत्सुबाहुकम् ।
पत्रिभिर्भुजगभोजिपत्रिभिर्नाशमापुरपरेऽसुरास्ततः ॥५७॥
रामशान्ततमविघ्नमध्वरे कौशिकोऽथपरिपूर्णतां गते ।
पूर्णयज्ञफलमापदुर्लभं ह्यीश्वरे किमनुकूलतां गते ॥५८॥

दक्षिणीयतमयाजकेष्वलं प्राप्तवत्सु वरदक्षिणामतः ।
श्रूयते स्म मिथिलेशमन्दिरेऽधिज्यतेशधनुषः पणः किल ५९॥
कौतुकी कुशिकनन्दनोऽभ्यगाज्जग्मतुस्तमनु तावुभावपि ।
पीतनीलवसनौ मृगेन्द्रवद्गामिनौ दशरथस्य दारकौ ॥६०॥
गौतमाश्रममवाप गाधिजो यत्र तस्य वनिता शिला स्थिता ।
तं जगाद मुनिशापहारिणीं भारतीं श्रुतिमनोहरां मुनिः६१॥
पादपङ्कजरजष्कणैरमूं पापगोत्रभिदुरोपमैः स्पृश ।
कौतुकेन रघुवंशजः पदा तां निशम्य समुदाऽस्पृशच्छिलाम्॥
तस्य पादरजसः प्रभावतः संबभूव ललनोत्तमा शिला ।
तं प्रशस्य विविधैः स्तवैः क्षणादक्षिपादसविधं गता सती ६३॥
आगतौ त्रिपथगां कुमारकौ कौशिकेन सह तर्तुकामकौ ।
नाविकेन तरणाय वारितौ रामपादरजसो भयेन तौ ॥६४॥
तावकाङ्घ्रिरजसो हि लक्षणं मानुषीकरणमित्युवाच सः ।
क्षालनेन न विना निधीयतां नावि पादकमलं मम प्रभो ॥६५॥
क्षालयेति गदितेन धाविते नाविकेन चरणाम्बुजेऽमुना ।
आतरायिततनुर्निजाऽर्पिता नाविकाय सकुटुम्बकाय च॥६६॥
आरुरोह तरणिं स राघवः सानुजो मुनियुतो हसन्निव ।
गाङ्गपारतरणाय मा भवेत् कालयापनमिति क्षणोत्सुकः॥६७॥
जग्मतुः कुशिकनन्दनेन तौ चापकौतुकदिदृक्षयाकुलौ ।
जान्हवीं समवतीर्य पाविनीं तीरभुक्तिनगरीं गरीयसीम् ॥६८॥

जानकी जनिमधत्त यत्र तां पण्डितैर्द्विजवरैश्च मण्डिताम् ।
वाग्वतीसरिदगाधपुष्करां कालवर्षिघनरक्षिताक्षितिम् ॥६९॥
राघवान्वितमृषिं समागतं संनिशम्य कुशिकान्वयं पुरः ।
उद्ययौ सह पुरोधसा पुरात्पूजितुं नृपवरः सपर्यया ॥७०॥
पाद्यमर्घ्यमुपनीय सादरं चानिनाय मुनिवर्यमालयम् ।
पृष्टभव्यमवनीपतिर्मुदा रामलक्ष्मणयुतं युतः शनैः ॥७१॥
आसितेषु मणिनिर्मितेष्वसावासनेषु रुचिरेषु तेष्वलम् ।
प्राञ्जलिर्नरपतिर्मुदा मुनिं पृष्टवान् सविनयस्मितं किल ॥७२॥
शम्बरारिविदिमौ मनोहरौ यूथनाथरिपुपोतगामिनौ ।
नागराजभुजदण्डशालिनौ कस्य चीर्णतपसः सुबालकौ ७३॥
आदरेण परिपृष्टगाधिजः प्रोचिवान् स जनकं जनाधिपम् ।
दक्षिणीकृतसमस्तसम्पदः सूर्यवंशजरघोः प्रपौत्रकौ ॥७४॥
पौत्रकावजनृपस्य चात्मजौ भूभुजो दशरथस्य सङ्गरे ।
योद्धुमुद्यतवतः सहायतां वज्रिणः कृतवतः पुरात्त्विमौ॥७५॥
आगतौ शिवधनुः समीक्षितुं प्रोत्सुकेन नृपतेरिहात्मजौ ।
तोलितं न वलयीकृतं न वा विक्रमेण बलिभिर्नृपात्मजैः ।७६॥
तन्निशम्य वचनं नृपो हृदि स्वे निनिन्द पणमात्मनो यतः ।
अश्मसारवदिदं धनुः कथं ज्यानिरूढममुना विधीयते॥७७॥
आवदत् क्षितितलं महामुने वीरहीनमधुना पणो महान् ।
अन्यथा रुचिरगात्रमेतकं संयुनज्मि सुतयाऽनया पुरा॥७८॥

आधिजं परिनुदन् स गाधिजो दुःखमस्य समवोचदुक्तिभिः।
इन्द्रगोपसदृशोऽपि पावके दाहशक्तिमिव शक्तिमत्र वै ॥७९॥
सीतया कलितरामरूपया निन्दितं रुचिरमात्मनो वपुः ।
राघवोद्वहनकर्मणा विना मानसेन चरितं पितुश्च ह ॥८०॥
जानकीहृदयसंस्थितं दलन् प्रास्फुरत्सपदि संशयं मुहुः ।
सव्यबाहुरवनीभुजां पुनर्मानहानिमपि सूचयन् भृशम् ॥८१॥
कौशिकेन समुदीरितो नृपो रङ्ग आशु विदधे नृपोचिते।
मञ्चकान् परित आस्तृताम्बरान् भूमिपासनविभूषितान्तरान्॥
आसनेषु समवस्थिता नृपाः स्वेषु रत्नवरवेषधारिणः ।
आबभुर्वरनिचोलसंवृताः खे ग्रहा इव मरीचिभासुराः ॥८३॥
आनकेषु च नदत्सु सर्वतो मागधेषु नृपवंशसूचिषु ।
उच्चरत्सु नृपकीर्तिमुज्ज्वलामाददे नृपपुरोधसा वचः ॥८४॥
शैवकार्मुकवरे बलोत्तरैः स्थापितेऽयुतनरैः प्रयत्नतः ।
राघवेण पुरतः परीक्षणं दीयतामिति नृपस्य सम्मतिः ॥८५॥
केशभारमवबध्य राघवः सूक्ष्मपीतवसनेन मध्यमम् ।
सम्प्रताड्य भुजदण्डमद्भुतं प्राग्रहीद्धनुरथो स लीलया ॥८६॥
को स्थिरा भव दिशां गजाःस्थिराःस्त स्थिराश्च फणिकूर्मशूकराः।
राम एष धनुराततज्यकं कर्तुमिच्छति वदत्यृषाविति ॥८७॥
लक्ष्मणेऽपि समुदीर्णलक्षणे तत्क्षणे प्रवचने विचक्षणे ॥
राम राम धनुषीदृशे कथं त्वं विलम्बयसि संवदत्यदः ॥८८॥

वामपादमनुसङ्कुचन्नयं दक्षिणं चरणमाप्रसारयन् ।
चापमानमयितुं समुद्यतः शैतिकण्ठमथ ताडकान्तकः ॥८९॥
गामिमां जिगमिषुं रसातलं पादपद्मभरतः फणीश्वरः ।
चक्रिभिः प्रवरमध्यमाधमैरुन्निनाय सह सप्रयत्नतः ॥९०॥
गौरियं समभवत्ततोऽसमा किं पृदाकुधरणीपतिः फणाम् ।
केवलां किमु सहस्रधाऽकरोद्भूमिभारधरणाय योगवित् ॥९१॥
दिग्गजाः प्रचलितां धरामिमां स्वैःशिरोभिरथ तां स्थिरां नताः।
ऊर्ध्वपुच्छमिवकर्तुमुद्यतास्तेन पुष्टपिटकौ शिरःस्थितौ ॥९२॥
भज्यमानवसुधां विलोक्य तामुद्दधार दशनेन शूकरः ।
वक्रतामनुययौ ततोऽस्य किं चार्द्धचन्द्रसदृशीं रदो भरात्९३॥
तादृशीं वसुमतीं नतां स्थितां कच्छपश्च चरमे तनोर्महान् ।
उन्निनाय बलतस्ततोऽस्य तत् कुब्जतामिव जगाम भारतः९४।
चुक्षुभुः सलिलराशयस्तदा संत्रसत्तिमिझषादिजन्तवः ।
चेलुरष्टकुलपर्वता मुहुः सङ्घशोऽप्युडुगणा दिवश्च्युताः ॥९५॥
वामहस्तशतपत्रकार्मुको बद्धपीतपटगाढकक्षकः ।
आततज्यमकरोद्धनुर्बलात्कुण्डलोल्लसितगण्डमण्डलः ॥९६॥
कर्षति स्वनिनदग्रहावधि चिच्छिदेऽत्र सुदृढं स्वनोत्तरम् ।
पश्यतां सदसि भूभुजां शिरो नामयत्पुररिपोर्महद्धनुः ॥९७॥
देवताकरसरोरुहेरिता वृष्टयः सुमनसां मुहुर्मुहुः ।
रङ्गमध्यगतराममस्तके देवदुन्दुभिरवैः समं च्युताः ॥९८॥

आनका जनकभूमिपालये ताडिता भृशमनेकशः समम् ।
नर्तनं च किल वारयोषितश्चक्रिरे जगुरनेकगायकाः ॥९९॥
आलिभिः सह चचाल जानकी मालिकां धृतवती कराम्बुजे।
वीक्ष्य राममुखपङ्कजं दृशा तां युयोज शनकैर्गलेऽमले॥१००॥
कीर्तिरस्य पुरतस्त्रपा गता जानकी च करपीडनोत्सुका ।
अन्तिका वृतवती पतिं गतं ज्येष्ठया दिशि नृपेषु चान्यया १०१
कौशिकोऽथ जनकेन पूजितः साधु साधु वदतेति चासकृत् ।
रक्षितोऽद्य भवता ममायकं गाधिपुत्र पुरुषार्थ आदिमः ।१०२।
प्रेष्यतामजसुताय मानवः कोऽपि रामकरपीडनाय हि ।
शीघ्रमेतु सचिवैः ससैनिकैः सार्द्धमात्मजवधूभिरीश्वरः।१०३।

इत्थं निवेद्य कुशिकान्वयमाप्तकामो
राजा पुरोधसमजात्मजसन्निधाने ।
प्रस्थापयद्रविकुलेन निजान्वयायं
सीताविवाहमिषतो विमलं करिष्यन् ॥१०४॥

आसीदारक्तनेत्रो भ्रुकुटिपरिलसद्वक्रपङ्केरुहश्रीः
पीनाजानुप्रलम्बिप्रबलकरयुगः पीतवासो दधानः ।
मुक्तास्रग्भूषिवक्षाः क्षितिनिहितधनुःखण्ड आखण्डलश्रीः
प्रोत्साही नेत्रकोणेक्षितनृपनिकरो वीररामःप्रसन्नः ॥१०५॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ धनुर्भङ्गो नाम द्वितीयः सर्गः ॥ २ ॥

# तृतीयः सर्गः।

श्रुत्वा धनुर्भङ्गमथो शिवस्य कुठारमारोप्य सुतीक्ष्णधारम्।
स्कन्धे प्रवालारुणलोचनश्री रुषान्वितोऽभूत्कृतवीर्यजारिः॥१॥
केनेशचापस्य कृतो विभङ्गस्तमानयिष्ये यमराजधानीम्।
शस्त्रेण तीक्ष्णेन मम प्रियेण बभाष इत्थं भृगुवंशकेतुः॥२॥
इन्द्रो भवेत्पाशधरः कुबेरो यमोऽथवा कोऽपि भवेत्कृतास्त्रः।
सोऽयं ममामोघकुठारवह्नौ पतङ्गधर्मा भवतु क्षणेन॥३॥
इत्थं प्रतिज्ञाय चचाल धीरो बभूव यत्रेष्वसनस्य भङ्गः।
धृत्वा कुठारं विकरालधारं साक्षात्कृतान्तः किल जामदग्न्यः॥४॥
वाति स्म वातः प्रखरः समन्तादुल्कानि पेतुः सहसा नभस्तः।
प्रादुर्बभूवास्य पराजयस्य प्रकाशकं दुःशकुनं गरीयः॥५॥
मूर्द्धाभिषिक्तान्तकरस्तथापि जगाम राज्ञो जनकस्य देशम्।
रोद्धुं न कोऽपि क्षमते बलीयाननेहसो वेगममोघमन्यः॥६॥
घोरान्धकारः प्रथमं बभूव तमो विभिन्दन्नथ जामदग्न्यः।
संहारकालानलदीप्ततेजा व्यदर्शि तेजोहतदृष्टिलोकैः॥७॥
हस्तेऽक्षमालां दधदिद्धमन्युः कुठारमंसे च जटाः शिरस्तः।
कक्षे निषङ्गं धनुरुग्रमंसेऽपरत्र रुद्रः खलु संजिहीर्षुः॥८॥

कोऽयं समायाति विरुद्धवेषः शरद्विवस्वानिव दुर्निरीक्षः ।
सन्देहमेवं विनुदन् जनानामसौ सदस्याविरभून्नृपारिः ॥९॥

भूपः समुत्थाय स सम्भ्रमेण वरासने तं विनिवेश्य पाद्यम् ।
अर्घ्यादि दत्त्वा समयूयुजच्च कृताञ्जलिः स्वागतमाह तं स्म १०

पूजामनादृत्य नृपस्य तस्य क्रुधा व्यवोचद् भृगुवंशकेतुः ।
कोऽयं धनुस्त्रोटितवान् शिवस्य वदाशु मह्यं तममोघवीर्यम् ११

तूष्णीं भवन्तं जनकं निरीक्ष्य विहस्य रामो निजगाद रामम् ।
क्षन्तव्यमेवेति कृतिर्ममेयं मुने महात्मा खलु शान्तवृत्तिः १२॥

श्रुत्वेति वाचं जमदग्निसूनुः क्रुधा श्वसन्नाह रघूद्वहं स्म ।
हस्तेन धृत्वा परशुं सुधारं प्रचालयन् दण्डमिवेनपुत्रः ॥१३॥

निर्द्वीपरं प्राङ् मम नाम चासीत् ससंशयं तत् त्वयि जातमात्रे।
तत् त्यज्यतामाशु नचेत्प्रकामं प्रदेहि युद्धं यदि बाहुजोऽसि १४

सौमित्रिराह स्म मुने शृणु त्वं वचो धृतं नाम कथं नु जह्याम् ।
इक्ष्वाकवो वाक्कलहं द्विजेऽपि न कुर्वते शस्त्रचयैः कुतोऽमी।१५।

चापाः शिशुत्वे बहवोऽपि भग्नाः खेलद्भिरस्माभिरहर्दिवं भो ।
कोपो न केषामपि जात एव प्रतीपमीक्षे भवतामिदानीम्॥१६॥

एकस्य चापस्य कृते महर्षे धनुःसहस्रं परिदातुमीहे ।
क्रोधं महान्तं परिमार्ष्टुकामः क्रुदन्तरायः खलु तापसानाम् १७

त्रस्यन्ति शक्रादपि वज्रहस्तात् न पाशिनो दण्डधराद्यमाच्च ।
इक्ष्वाकवो बिभ्यति भूसुराणां कुलावमानाच्छ्रुतयुद्धवीर्याः।१८।

विप्राः प्रणम्याः सततं रघूणां कृतापराधा अपि भूमिदेव ।
एवं वदन्तं तमुवाच रामः सन्तोलयन्हस्ततले कुठारम् ॥१९॥
त्रिसप्तकृत्वो निधनं नृपाणां सहस्रबाहुप्रमुखोद्धतानाम् ।
कृत्वा कुठारेण महेन्द्रशैले स्थितोऽधुनास्ते विदितो न किं ते २०
ब्रूषेऽसकृद्विप्र इति स्फुटं मामवेहि स क्षात्रियकालरात्रिम् ।
धारां शितां रामपरश्वधस्य तिरोभव त्वं यदि जीवनेच्छा॥२१॥
सौमित्रिराह स्म वदन्तमेनं तिरोहिताक्षस्य जगत्तिरः स्यात् ।
काष्ठं कुठारेण विपाटितं स्याच्छ्रुतं मयेदं शतशो महर्षे ॥२२॥
धर्ता कुठारस्य मया श्रुतोऽभूत् समित्सु शूरो न समित्सु शूरः ।
शस्त्री न गण्येत कुठारपाणिः कदापि शस्त्रे न कुठार उक्तः २३
सोढं प्रगल्भत्वमिदं त्वदीयं महीसुरत्वान्न च वीर्यवत्त्वात् ।
विप्रादृतेऽन्यत्र भवन्ति दीना न चापि गोप्यो रघवः प्रवीणाः २४
वक्तुं न पात्रं त्वमसीति चोक्त्वा स लक्ष्मणं राममथाबभाषे ।
भ्राता तवायं स्फुटमूढबुद्धिर्बलाबलं स्वस्य न वेत्ति नूनम् ।२५।
शक्तिस्तवास्तीति धनुर्मदीयं गुणेन संयोजय शीघ्रमेव ।
नो चेद्युधं देहि स उक्त एवं धनुः करात्तन्महसा चकर्ष ॥२६॥
कृत्वा ततज्यं धनुराविकृष्य शरेण सन्धाय जगाद रामः ।
केषुं क्षिपाणीति स चावदत्तं गतौ परत्रेति तथाऽकरोत्सः॥२७॥
दत्त्वा धनुश्चाथ सतूणमस्मै सहाशिषेयाय गिरिं महेन्द्रम् ।
रामः सचापः शुशुभे सभायां तदा वपुष्मानिव पुष्पधन्वा ।२८।

गत्वा पुरोधा रघुराजधानीं समर्प्य लेखं रघुनन्दनाय ।
वृत्तिं धनुर्भङ्गभवामथोक्त्वा स मानदाने समवाप राज्ञः ॥२९॥

सुमन्त्रमाहूय जगाद राजा रथाश्वपत्तिद्विरदाभियुक्ताम् ।
चमूं विवाहौपयिकं समग्रं कुरुष्व तूर्णं मिथिलागमाय॥३०॥

गुरुं पुरोधाय पुरोधसं सः प्रतस्थिवान्मैथिलराजधानीम् ।
बलैः समाच्छादितभूमिभागो जलैः सरस्वानिव भूमिपालः ३१

दिनैरनेकैर्मिथिलां जगाम मनोहरारामवतीं नरेशः ।
प्रत्युद्ययौ तं मिथिलाधिपालो वदान्यतोपार्जितकीर्तिमालः ३२

सेनानिवेशं जनकानुमत्या कृत्वा कृतातिथ्य इनो नृपेण ।
कृताभिवादौ तनुजौ शिरोभ्यामाघ्राय शीर्षेऽकृत चाशिषालम्॥

दूष्याणि राज्ञां सवितानकानि बभुः कलापावलिभिर्लसन्ति ।
रामाभिरामान्युपकाननानि यथा जनातापनिवारणानि।३४॥

उत्क्षिप्तकाण्डांशुकमार्गलीनप्रभञ्जनाचान्तनिदाघवारः ।
प्रापुः सुखं भूपतयः सनिद्रं निषेव्य शय्यां विशदाम्बराढ्याम् ३५

बालेयपृष्ठादवरुह्य गेहं वितत्य वासोमयमाशु वेश्या ।
दातारमागन्तुकमाप्तुकामा प्रसाधनं नूतनमाचकार॥३६॥

पर्यापतद्धस्निकलोकपूर्णामगण्यपण्यां विपणिं विभेजुः ।
विस्तार्य वासोमयगेहमाशु निषद्यकायां वणिजः फलाय।३७॥

प्रान्ते गजेन्द्रास्तरुपादपादबन्धा गिरीन्द्रा इव दन्तकान्ताः ।
सद्धातुरागैतशिरःप्रदेशा बभुः स्ववद्धाःकटकोल्लसन्तः॥३८॥

शीर्षाणि नागाः स्म नु कम्पयन्ति वयं कृतार्था इति सूचयन्तः।
रामस्य जन्यैः सह संप्रयाता यतो विवाहे कृतपुण्यपुञ्जाः॥३९॥
व्यालो विलोक्यान्यगजान्प्रकुप्यन् सितोऽपि संछिन्नपदाग्रबन्धः
तादृग्गजेन प्रहतो जगाम शमं खलः शाम्यति यत्खलेन॥४०॥
वाहा रयैर्निर्जितगन्धवाहा उरोविशाला लघुकर्णशालाः।
आवर्तयुक्ताः शुभशंसिशुक्तियुता निबद्धाः पटमण्डपेषु।४१॥
उत्तारिते पृष्ठत एव वाहाः पल्याणके क्षोणितले लुठित्वा ।
स्कन्धान्मुहुः संदुधुवुः सपांशून् सशब्दभाण्डं परिधूतखेदम्४२
श्रीवृक्षकी वाजिवरः शुभंयुर्वक्षोभवावर्त्तचतुष्टयेतः ।
कण्ठे महावर्तविरोचमानः समीप एवाजिनृपस्य तस्थौ ॥४३॥
भारे समुत्तारित एव चोष्ट्रवृन्दं म्रदीयश्छदनं विहाय ।
आम्रादिकं निम्बपलाशमादद्रुचिर्विभिन्ना खलु जीवजातेः४४
उक्षाण उत्तारितभार एव तले निषण्णा धरणीरुहाणाम् ।
रोमन्थकं चक्रुरलं श्रमेण चलत्कपोलं सुनिमीलिताक्षम्॥४५॥
पुण्याहघोषे समुदीर्यमाणे वशिष्ठमुख्यैर्द्विजवर्यसङ्घैः ।
संताड्यमाने पटहे समन्तात् सझल्लरीके मुरजादिमिश्रे ॥४६॥
दीपाः प्रदीप्ताः परितो महान्तः सचान्द्रकाः पुष्पकझल्लरान्ताः।
चत्वार आसन् प्रतिचक्रिचक्रं गजे गजे द्वौ प्रतिवाजि चैकः४७
शीर्षे किरीटं करकङ्कणं च वपुष्यशेषेऽखिलभूषणानि ।
कौसुम्भवस्त्राणि विधाय रामो रराज सादित्य इवोदयाद्रिः।४८।

शृङ्गारितेभीमधिरुह्य रामः सुमित्रिकासूनुकरावलम्बी ।
जन्यैः सहागान्मिथिलेश्वरस्य गृहं वरं मण्डपतोरणाङ्कम्।४९।

प्रत्युद्ययौ जन्यजनान् ग्रहीतुं सपर्यया मैथिलभूमहेन्द्रः ।
पूर्वापरौ तोयनिधी व सेने तयोरभूतां मिलिते हि राज्ञोः॥५०॥

साकेतनाथेन नृपो मिलित्वा यथोचितं जन्यजनैः समं च।
स्पर्शं च रामेण स कारयित्वा जनाश्रयस्याशु मुदं जगाम।५१॥

पूर्वोपक्लृप्तामुपकारिकां तं ससैन्यमावास्य महीपतिं सः ।
समग्रशक्तिर्नृवरोपयोग्यान् प्रयापयामास वरोपचारान् ॥५२॥

रामं समानीय चतुष्कमध्ये समर्प्य वासोयुगमादरेण ।
तस्मै नृपो विष्टरपूर्वपूजां समादिदेशैकमनाः सदारः॥५३॥

सीतामलङ्कारविभूषिताङ्गीं समीपमानाय्य सुगात्रयष्टिम् ।
हस्तं सुतायाः स वरस्य हस्ते सकङ्कणेऽकङ्कणिनं युयोज ५४॥

शङ्खेन दूर्वाम्बुफलान्वितेन ददौ स रामाय सदक्षिणां ताम् ।
नागान् सहस्रं मुशलोरुदन्तान् रथांश्च रौक्मान्नियुतं सदश्वान्॥

दासीसहस्रं समलङ्कृतञ्च
तथैव दासान् समलङ्कृताङ्गान् ।
रौक्माणि पात्राणि सुवर्णमुद्राः
सहस्रशो गा महिषीर्महाङ्गान् ॥ ५६ ॥

तत्सारदानान्न ददौ धरित्रीं स कूकुदत्वान्मिथिलाधिराजः।
सारप्रदाने फलमीरितं स्यादसारदाने मुनिभिर्यतो न ॥५७॥

प्रत्तां गृहीत्वा प्रययौ स वेदीं यतः प्रणीतो ज्वलनः प्रदीप्तः ।
श्रीरामचन्द्रेण हुतं हविर्भुक् कृतार्थतामाप हविः समश्नन्।५८।
सीता विधातुस्तनयेन मिश्रान् शमीपलाशैर्हविषा च लाजान्।
संप्रेरिताऽग्नौ जुहवाञ्चकार त्रपान्विता रक्तसरोजनेत्रा ।।५९।।
तौ दम्पती दक्षिणतः क्रमन्तौ विरेजतुर्वायुसखस्य मन्दम् ।
विद्युद्घनौ वायुवशाद्भ्रमन्तौ प्रदक्षिणेनेव दिवाकरस्य ॥ ६० ॥
सीमन्तसिन्दूरभरोऽरुणश्री रराज कामं जनकात्मजायाः ।
आगामिभानोः प्रथमाऽरुणश्रीस्तमोजयार्थाय किमाविरासीत्॥
तौ दम्पती तत्र कृताभिषेकौ वरासनस्थौ क्षितिपैरुदीर्णाः ।
विप्रैः सदारैश्च सुवासिनीभिर्वराशिषोऽथो शिरसाऽग्रहीष्टाम्६२
दत्त्वा च दाक्षिण्यमहीसुरेभ्यो वरो वशिष्ठाय पुरोधसे गाम् ।
सुवर्णधेन्वश्वगजांशुकानि स कौतुकागारमथो जगाम।।६३।।

सीतानुजामुद्वहति स्म कन्या-
मथोर्मिलाख्यां किल लक्ष्मणोऽपि ।
तौ माण्डवीं च श्रुतकीर्तिनाम्नीं
कुशध्वजस्यात्मभवेऽवशिष्टौ ॥ ६४ ॥

सीतां समालिङ्ग्य जगाद माता पतिर्मनस्कायवचोभिरार्ये ।
सेव्यस्त्वया तत्पितरौ च येन निमेर्न हास्यत्वमुपैतु वंशः।।६५।।
स्त्रीणां पतिर्दैवतमेव नान्यत्सनातनीदं श्रुतिराह नित्यम् ।
तस्माद्विना तद्वचसा न कार्यं व्रतादिकं किं पुनरन्यकार्यम्६६

शिक्षाविधानं दुहितुः प्रदाय गृहीतकण्ठा प्ररुरोद माता ।
प्रयाणकाले दुहितुः कठोरहृदोऽपि हि स्याद्रुदितं जनस्य॥६७॥
एवं सुतान्पङ्क्तिरथो विवाह्य नृपादनुज्ञामधिगम्य राजा।
साकेतकं स्वं नगरं जगाम सतोरणं स्थापितपूर्णकुम्भम्॥६८॥
अध्युष्य मध्ये वसतीरनेका जनीर्गृहीत्वा महनीयवेषाः ।
सम्प्राप सामन्तजनैः समेतः पुरीमयोध्यामजराजसूनुः॥६९॥
नासीदयोध्यामनु दुन्दुभीनां नृणां विरावैर्बधिरीकृतानाम् ।
रामादिसन्दर्शनलालसानां करप्रचारेण विनाऽनुबोधः॥७०॥
अन्तःपुरे व्यग्रपुरन्ध्रिवर्गे नृपाङ्गना मङ्गलपात्रहस्ताः ।
नीराजनं चक्रुरथो वधूभिः समं सुतानां गृहमागतानाम्॥७१॥

पुरीं यातः शातक्रतवनगरानूनमहसं
नृपान् जन्यान् भूषावसनगजवाज्यादिभिरलम् ।
स सम्राट् सन्तोष्य प्रमुदितमनाः स्वं स्वमदिशत्
प्रयान्तुं मानार्हानजनृपतिसूनुर्जनपदम् ॥ ७२ ॥

दशरथनृपवर्यः संविवाह्याथ सूनून्
कमलजभवमुख्यान् वाडवान् कौशिकं च ।
प्रणतिभिरतिभक्त्या मानयित्वा स मान्यान्
सुरपतिरिव राज्यश्रीयुतो राजते स्म ॥ ७३ ॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ श्रीरामपरिणयो नाम तृतीयः सर्गः ॥ ३ ॥

# चतुर्थः सर्गः ।

भूमिपे दशरथेऽवधनाथे व्याधयोऽभिभवितुं न विशेकुः ।
आधयोऽपि मनुजाननुकूलानीतयोऽपि वसुधामवतीत्थम् ।१।
यावदातपति भानुभिरह्नामीश्वरोऽधिवसुधं वसुधेशः ।
तावदेव निखिलादपि कृच्छ्रादौरसानिव जनान् स जुगोप।२॥
जानते स्म नृपतिं पितरं ताः पालनात्कुपथवारणतोऽपि ।
लाडनाच्च पितरो जनतानां केवलं जननहेतव आसन् ॥३॥
मान्य एष महतामपि राज्ञां पूर्वमेव महसा यशसासीत् ।
किं पुनर्विबुधराजनिकाशैरस्त्रशस्त्रकुशलैस्तनुजैस्तैः ॥ ४ ॥
बुद्धिधैर्यबलशीलविभूतेर्मुख्यधीसचिवमन्त्रविचारात् ।
राम एष जनताबहुरागात्तन्नृपस्य न चचाल मनस्तः ॥५॥
यौवराज्यपदयोग्यतमोऽयं कर्णमूलमधिगम्य नृपस्य ।
कैतवेन पलितस्य नृपश्रीराचचक्ष इति किं गुणलुब्धा ॥६॥
स्वं विलोक्य नृपतिः प्रतिबिम्बं दर्पणे करधृते पलिताङ्कम् ।
भूमिभारमवधातुमथैच्छद्राममूर्ध्नि चिरमात्मधृतं सः ॥७॥
स्वैरिणीव वसुधा जरयाऽऽशु ग्रस्तमुल्लसितरागमपीशम् ।
प्रायशोऽवमनुतेऽतनुगात्रं चेतसेति नृपतिः समवोचत् ॥८॥

आजुहाव सचिवं स सुमन्त्रं संभृतं समुचितं च विधास्यन् ।
रामचन्द्रतनयं युवराजं स्वस्य काननगमं क्षितिपालः ॥९॥
आगतेन सचिवेन वशिष्ठमानिनाय्य नृपतिः समवोचत् ।
आर्य कार्यमुचितं युवराजत्वेऽनुमन्त्र्य भरताग्रजमाशु ॥१०॥
राममेत्य परमेष्ठितनूजोऽङ्गीकुरुष्व जनकस्य निदेशम् ।
अद्य तिष्ठ नियमे भवितासे यौवराज्यमिति वाक्यमवादीत् ११।
सस्मितं मुनिमभाषत रामः कार्य एव जनकस्य निदेशः ।
किं तु तत्रभवतो भवतोऽस्मद्भाव्यकार्यविदतोऽङ्ग निदेशः १२।
काल एव कुरुते तनुभाजः पालयत्यविरतं हरते च ।
कालसादिदमतो जगदित्थं कोऽपि वेत्ति खलु कालगतिं नो १३।
कालपाशवसितो जन उच्चैर्नस्यया<अत्त ऋषभो व पदं नो ।
गन्तुमीष्ट इति शास्त्रविचाराज्ज्ञायते स दुरतिक्रम एषः ।१४॥
ज्ञानिनामपि मनो हरतेऽलं धीमतामपि धियं बत कालः ।
योगिनामपि समाधिमतोऽयं ज्ञायते कथमहो जनताभिः।१५।
कालकर्मगहने त्वतिदुर्गे मोहमेति महतामपि चेतः ।
मादृशां विषयकृष्टधियां किं मुह्यतीति मतिरब्जजसूनो॥१६॥
एवमेव वचनं निगदन्तं ब्रह्मसूनुरवदत्तमुदारम् ।
ईदृशं न वचनं वचनीयं पुरुषोत्तम कदापि निकामम् ॥१७॥
आगमिष्यदचलातलमेतज्ज्ञासितुं यदि भवान्न खलानाम् ।
पालनाय च सतामभविष्यन्मादृशां नयनयोः कथमाविः१८।

कारणस्य मम कारणमासीरेक एव गुणभेदवशेन ।
ब्रह्मविष्णुहररूपधरो यस्तस्य कालकृतभीतिरियं का ॥१९॥
गर्हिता किल पुरोहिततेयं सर्वलोकविदितैव महात्मन् ।
त्वद्गुरुत्वपरिलब्धुमनस्त्वात् सा कृता तदभवन्मम राम २०।
राघवं तमनुमन्त्र्य वशिष्ठो भूमिपाय विनिवेद्य सुवार्ताम् ।
संभृतं च समकारयदाशु राजभूतिसदृशं विधिदक्षः ॥२१॥
उत्सवोत्सुकितभूरिजनायां तत्पुरि प्रहसिताब्जमुखानाम् ।
प्रातराशु भवतादिति वादः संबभूव सहसा जनतानाम् ।२२।
गीतवाद्यनिनदोऽवधपुर्यां कुम्भतोरणवितानलसन्त्याम् ।
चन्दनद्रवविशोषितधूल्यां प्रोद्बभूव परितः प्रतिगेहम् ।२३।
भारतीं सुमनसोऽथ समूचुर्मन्थराहृदयमाविश भाषे ।
यौवराज्यपदलाभविघातं राघवस्य कुरु तन्मुखवाण्या ॥ २४ ॥
भारती समनुभाष्य तथेति तान् सुरान् परमकारणवेत्री ।
मन्थराहृदयमाशु विवेश त्वाविलाय करिणीव सरोम्बु ॥२५॥
तत्क्षणं समुपगम्य सकाशं नक्तमेव भरतस्य जनन्याः ।
साह च स्म महिलां नृवरस्य कालरात्रिरिव जल्पनदक्षा॥२६॥
वञ्चिता नृपतिना मतिहीने वल्लभाऽसि वदतीति निकामम् ।
कोशलेशसुतया किमपूर्वं दुश्चरं तप उपासितमाले ॥२७॥
तत्सुतोऽथ भविता युवराजस्त्वत्सुतस्तदनुगश्च वयस्ये ।
लक्ष्मणस्तदनुसारितयाऽलं भोक्ष्यते सहवसन्नृपसौख्यम् २८

एतमर्थमवधार्य नृपेणोत्थापितो भरत आत्मपुरीतः ।
मक्षिकेव पयसः प्रियता क त्वत्सुते त्वयि कुतश्च नृपस्य॥२९॥
इत्थमेव वचनं निगदन्तीं प्रावदच्च जननी भरतस्य ।
आलि किं वदसि राममभीक्ष्णं सानुरागमधिकं मयि विद्धि ३०
एवमेव वचनं प्रवदन्ती वक्रया प्रतिवचः सहसोक्ता ।
कौशलेयजननी नृपमान्या भोगिनी च भवती भविता श्वः ३१।
सख्यनिष्टमवलोक्य स वाच्यः किंसखेति हितहेतुमशासत् ।
वच्म्यतो हितमसम्परिपृष्टा धूमयोनिरिव कालसुवर्षी ॥३२॥
युध्यतो दितिसुतैर्मघवार्थे भूपतेरविदुषोऽपि वयस्ये ।
भग्नचक्रिशिवदारुवपायामङ्गुलिं सखि समर्पितवत्या ॥३३॥
रक्षितोऽयमददाच्च भवत्या संयुगे वरयुगं क्षितिपस्ते ।
तत्तु तत्र निहितं सखि काले दास्यसीति समयं कृतवत्या।३४।
तस्य याचितुमयं सखि कालो याचयस्व नृपतिं वरयुग्मम् ।
त्वत्सुतस्य भरतस्य नृपत्वं राघवस्य च निवासमटव्याम्।३५॥
इत्थमालिवचनं विधिगत्या स्वीकृतं मनुजनाथयुवत्या ।
गर्भधारणमिव क्षणमत्या कर्कटस्य निधने गृहमत्या ॥३६॥
सा निशान्तमवधूय निशान्ते भूतले स्वपिति निर्मनुजे स्म ।
भूमिपालवरलाभविधानावध्यधीतकुशलामनुतन्त्रा ॥३७॥
प्रातरेव जनता जनपालाज्ञागृहीतबहुसम्भृतभाराः ।
आययुर्नृपसभं वरभूषावस्त्रशालितनवोऽतनुकान्ताः॥३८॥

आनकाश्च शतशः परिणेदुस्ताडिताः क्षितिपतेरधिशालम् ।
ताण्डवानि विदधुर्वलभीस्था बर्हिणो घननिनादविशङ्काः ३९।
ब्रह्मकल्पविधिसूनुपुरोगा आगता द्विजवरा नृपगेहम् ।
पङ्क्तिशो रचितवस्त्रविभूषा आययुश्च गणका गणितेज्याः।४०॥
रेजिरेऽजतनुजस्य गृहान्ते सज्जिताश्च गजराजसमूहाः ।
गैरिकादिपरिभूषितशीर्षाः संस्थिता इव परे नगराजाः॥ ४१॥
सज्जिता नरपतेरतिदेशात् वाजिनोऽखिलवनायुजमुख्याः ।
मन्दुरामभित आबभुरुच्चैर्भाण्डभासिवपुषो मुखसिद्धाः॥४२॥
कन्यकाः कमलपत्रकराग्रस्थायिरुक्मकमनीयसुपात्राः ।
राघवस्य युवराजपदत्वप्राप्तये समुपगम्य समासन् ॥४३॥
तोरणोन्नमितकेतनवत्या सञ्चरत्सरणिवारयुवत्या ।
मागधोच्चरितवंशजकीर्त्या दिद्युतेऽजनृपसूनुनगर्या॥ ४४ ॥
प्रेष्य धातृतनयं विनयेन रामचन्द्रसविधे स महीपः।
आजगाम भरतस्य जनन्याः सद्मनीन्द्रभवनेन समाने॥४५॥
तत्र तामनवलोक्य महीशः किङ्करीं नु समपृच्छदमुष्याः ।
तिष्ठति क्व दयिता वद खेदमर्पयन्त्यनुचितं मम चित्ते ॥४६॥
कोपसद्मनि स पद्मसमास्या वल्लभेति गदितो बत दास्या ।
संययौ सविधमाशु नरेशः केकयेशदुहितुः करुणेशः॥४७॥
भूतले स्वपिषि कच्चिदनर्हे वावदीषि मयि नो वचनार्हे ।
भूषणानि परिहाय किमर्थं द्राग्विधेहि गमनं मम सार्थम्॥४८॥

मद्विधेय इति मां कलय त्वं किं पुनर्वहसि सुभ्रु मुनित्वम् ।
ब्रूहि राज्ञ्यननुकूलविधाता कस्तवालि यमधाम स याता ॥४९॥
तं वदन्तमवदद्दयितेति क्रोधरक्तनयनाननपद्मा ।
साधु साधु जनवञ्चनचुञ्चोऽनाथनाथ बत किंगुणकञ्चो॥५०॥
वल्गुवाक्यपरिभाषणदक्ष क्रौर्यरज्जुपरिणद्धसुकक्ष ।
छद्मकर्बुरितमानसवेश्मन्नास्यतामरसतुल्य हृदश्मन् ॥५१॥
मातुलेक्षणमिषेण तनूजो यापितो निजपुरान्मम राजन् ।
राज्यभारमवतार्य शिरस्तो राम एव विनिधातुमनस्त्वात्॥५२॥
वल्लभे त्वमिति पूर्वमवादी राम एष भरतादपि मान्यः ।
किं प्रतीपमधुना वदसि त्वं भूभुजेति गदिता दयितासीत्॥५३॥
भूपतिं निगदति स्म तदा स्त्री छद्मवाक्यरहितो मयि यत्त्वम् ।
तर्हि मे यदनुकूलमतः स्यात्तत्कुरुष्व नियमेन महात्मन्॥५४॥
दत्तमस्ति भवता वरयुग्मं तस्य दानसमयः खलु यातः ।
दीयतां यदि मनस्तव दातुं सत्यशालिवचनाः खलु सन्तः॥५५॥
राज्ञि दातुमनसि श्रुतवाक्ये सत्यवादिनि वधूरययाचत् ।
एककेन भरताधिपतित्वं रामवासमपरेण वनान्ते ॥ ५६ ॥
भारती भरतमातुरयोग्या मर्मभेदकुशलाऽहिसरूपा ।
पार्थिवो हृदि तया किल दष्टः सौभगेन निपपात सहास्याः॥५७॥
राम राम विलपन्निति राम राम राम करुणारससिन्धो ।
राम राम मम पुन्नरकघ्न राम राम परलोकसुबन्धो ॥५८॥

मस्तकोपहितरत्नकिरीटः कुण्डलोल्लसितकर्णकपोलः ।
वत्सपाणिचरणादिविभूषाभूषितो गुरुपुरस्सरगामी ॥५९॥
आगतोऽथ भरतस्य जनन्या मोहिताप्तजनसेवि निशान्तम् ।
शान्तशातमुपचारविहीनं स्वामिशून्यसदनं व स रामः ॥६०॥
संविलोक्य पुरतो वनिताया निष्प्रभं पतितं पितरं तम् ।
पुण्डरीकदयितासविधस्थं मांसपिण्डमिव हेत्यवदत्सः॥६१॥
अम्ब किं न जनको वदतीमं सा सुतेन गदिताऽवददित्थम् ।
राम राम वदतीति स कामं जीवनं नरपतेस्त्वदधीनम् ॥६२॥
लज्जते स मुखतो बत वक्तुं वत्स शृण्विति हि मन्निगदन्त्याः।
प्रत्तमस्ति वरयुग्ममनेन सत्यवाक्यमवता त्वदधीनम् ॥६३॥
अम्ब किं वदसि राममधीनं पुत्रताप्रथमलक्षणवन्तम् ।
वाक्यसारविदुरेति विमाता प्रत्यवोचदमुमर्थपरा सा ॥६४॥
लभ्यतां मम सुतेन नृपश्रीर्गच्छ राम विपिनं पितृवाक्यात् ।
वत्सरान्सचतुरो दश वत्स तत्र तिष्ठ नगरे वस वाऽन्ते॥६५॥
अम्ब तातचरणस्य निदेशात्कार्यमेव सकलं करणीयम् ।
उत्थितो नरपतिस्तमुवाच तात राम वचनं मम कार्यम्॥६६॥
वत्स वत्स पदयोर्मम दत्त्वा शृङ्खलामतिदृढामधिकारम् ।
मां निगृह्य कुरु राज्यमकण्टं सत्यवाक्यकवचं सह दारैः॥६७॥
तात तातचरणस्य निदेशात्कालकूटमपि पेयतमं मे ।
किं पुनर्निवसतो वद खेदो दण्डकादिविपिने सदने वा ॥६८॥

राघवेरितमिदं श्रुतवत्या केकयाधिपतिमूढदुहित्रा।
चीरवस्त्रयुगलं मुनियोग्यं राघवाय समदत्त वनाय ॥६९॥
सोऽभिसृत्य जननीमिदमूचे बोधनाय गमनस्य वनान्ते।
अम्ब तातचरणस्य सपर्या सर्वदा मधुरिपोरिव कार्या॥७०॥
अम्ब तातचरणैः किल राज्यं दत्तमत्र भरताय महीयः।
दण्डकारण्यवनराज्यमकण्टं मह्यमेव निखिलं जनगुप्त्यै॥७१॥
प्रेषितोऽसि जनकेन वनाय त्वां रुणध्मि हि वनाय गमो मा।
मान्यता दशगुणाऽनसि तातात्द्वारितोऽभवदिति प्रसवित्र्या७२
लक्ष्मणः प्रकुपितोऽथ बभाषे स्त्रीजितं जनकमाशु निगृह्य।
त्वां दधामि नृवरासनमध्ये भुङ्क्ष्व राज्यमपशत्रु महीयः॥७३
अन्तरायकृदतो भरतश्चेत्तं निहन्मि सह मातृकुलेन।
आत्तचापमिति तं वचसा द्राग्व्याजहार शमयन्रघुनाथः॥७४
विद्धि वीरवर देहमनित्यं भस्मविट्क्रिमिदशं परिणामे।
तत्कृते तु कलहं भुवि विद्वान् आः करोति मृगदंशकवत्कः७५
तन्निदानमितरत्सुतजायाकोषराज्यगजवाजिरथाद्यम्।
आत्मसादिदमतः कलयेत्कस्त्वादृशः श्रितगुरुश्रुतसारः॥७६
वत्स वीर नृपतेर्जननीनां रक्षणापचितिके कुरु तावत्।
आगमावधि ममेति नियुक्तः कौशलेयमवदत्स कनीयान्।७७
दण्डकं वनमहं प्रतिजाने त्वां व्रजन्तमनुगन्तुमवश्यम्।
त्वत्पदाब्जपरिषेवितुकामं मां गृहाण रघुनाथ वनान्ते ॥७८॥

ओमुदीर्य गतवन्तममन्दं
मन्दिरं निजममुं स्मितपूर्वम् ।
जानकी निगदति स्म सलज्जं
राजलक्ष्म विनिधाय किमागाः ॥ ७९ ॥

अत्र राज्यमददाद्धरताय दण्डकाधिपतितां क्षितिपो मे ।
सत्यवाक्ययमितो महिलेऽहं दण्डकाख्यविपिनं सखि गन्ता॥
अङ्गने हि पितरौ मम सेव्यौ वेदनां विरहजां न लभेताम् ।
सुभ्रु रीतिरियमेव सतीनां यन्निदेशकरणं निजभर्त्तुः ॥८१॥
तन्निशम्य वचनं वनिता तं प्रत्युवाच भवता सह गन्तुम् ।
साम्प्रतं कमलनेत्र समीहे मा विधेहि विफलां मम वाञ्छाम्॥
तत्र तत्रभवता सह याने नो भविष्यति मनागपि खेदः ।
स्वामिना सह गमो वनिताया अन्यलोक इह किं न हि युक्तः॥
जानकी गुरुवधूभ्य उदारा सन्ददौ सकलरत्नविभूषाः ।
अंशुकानि च बहूनि महार्घ्याण्यानिनाय्य सधनानि गुरूणि॥
अङ्गनां जिगमिषुं सह बुद्ध्वा दण्डकाय विपिनाय पुरस्तात् ।
अस्त्रशस्त्रसहितो भव वीरेत्यादिदेश लघु लक्ष्मणमार्यः॥८५॥
ब्राह्मणाश्च भृतका गृहदासाः प्राकृता अनुजदारसमेतः ।
तेभ्य ऋक्थमतुलं स समर्प्य तातगेहमगमद्रघुनाथः ॥८६॥
भूपपादकमले प्रणिपत्य प्राञ्जलीन् स्थितवतो भरतानः ।
तान्विलोक्य वरचीरनिचोलान् सा ददौ सुकठिना बत तेभ्यः॥

चीरवस्त्रयुगलानि गृहीत्वा पर्यधादनुजदारसमेतः ।
मूर्तिमानिव वधूसखयुक्तो दर्पको रघुवरः स च रेजे॥८८॥
स्थापिते नृपनिदेशविधात्रा मन्त्रिणा रथवरे रघुवीरः ।
आरुरोह वनितावरजाभ्यां साकमाशु गमनाय समुत्कः॥८९
आनुनोद चतुरश्चतुरोऽश्वान् वेगनिर्जितसुपर्वतुरङ्गान् ।
तैः क्षणेन तमसामथ तीर्त्वा ते निषेदुरवनीरुहमूले ॥९०॥
मातरं च भरतस्य शपन्तः सत्यतेति नरपे क्व लपन्तः ।
आययुस्तमनु पौरजनास्ते रामचन्द्रविनिवर्तनकामाः ॥९१॥
तेऽपि तीर्णतमसास्तमसार्त्तास्तीरजाततरुमूलनिकेताः ।
तान्विलोक्य निशि राम उदस्थादारुरोह रथमाप्तयुतं सः ॥९२
ते तु दुःखमतुलं खलु माशुः पत्तनाभिमुखमेत्य पुरस्तात् ।
वक्रमार्गगमनेन पुनस्ते श्रृङ्गवेरमगमन् करुणातः ॥ ९३ ॥

प्रातरात्तगतयः पुरलोकाः
स्यन्दनस्य नगराभिगतस्य ।
सन्निवृत्य विविशुर्निलयान् स्वान्
चारतो निजगृहान् ग्रहवत्ते ॥ ९४ ॥

शिंशपातरुतले सुनिषण्णान् वीक्ष्य तान्समुदियाय गुहोऽथ ।
अग्निभूरिव शिखण्डिविहारी तारकामयजयी गुरुशक्तिः ॥९५
आह च स्म मम नाथ विश त्वं दण्डकादपि वनं हि गरीयः ।
तत्र तत्रभवतो वसतोऽयं यास्यति क्षणसमस्तव कालः ॥९६॥

सन्निधाय फलमूलकदम्बं धीवरो रघुवरस्य पुरस्तात् ।
भुज्यतामिति वदन् प्रपदाग्रे दण्डवत्प्रणिपपात धरण्याम् ॥९७
आलिलिङ्ग सह तेन परात्मा चाह तं स्म भरतादधिकस्त्वम् ।
आनिनाय्य वटदुग्धमनेन स्वाः जटाः समकरोद्रघुनाथः॥९८
लक्ष्मणेन सह गुहेन निशायां रक्षितो रघुवरोऽथ शयित्वा ।
उत्थितो वनितया सह कल्ये देवसिन्धुतरणाय तरण्या॥९९॥
यापयन्रथयुतं स सुमन्त्रं संदिदेश जनकाय जनन्यै ।
मत्कृते न कुरुतां सविमात्रे मन्युमात्मनातिमित्यवदच्च ॥१००।
आरुरोह तरणौ तरणौ संप्रोदिते तरणिवंशजनिः सः ।
मित्रताऽऽतरकृतार्थगुहस्त्रीलक्ष्मणैः सुरसरित्तरणाय ॥१०१॥
उत्ततार सुरसिन्धुमबन्धुं कल्मषस्य सुकृतस्य खनिं सः ।
शर्वसङ्गभसिताक्तपयोभिर्निक्तपापमलिनांशुकपुञ्जाम् ॥१०२
सन्निवर्त्य निलयाय सखायं पादपद्ममधुपायितशीर्षम् ।
आश्रमं मुनिवरस्य भरद्वाजस्य दाशरथिराप सुरम्यम् ॥१०३॥
पर्यपूपुजदमुं स महर्षिरर्घ्यमूलफलकं सकलत्रम् ।
लक्ष्मणेन सहितं समुदञ्चद्भक्तिलब्धपरिहर्षनिमग्नः ॥१०४॥
संलपन्स मुनिना रजनीं तां संव्यतीतमुनिभूमिपतीनाम् ।
वार्तया परिगमय्य निशान्ते तीर्थराजवसतेरथ यातः ॥१०५॥
नौकया समवतीर्य विवस्वत्कन्यकां रघुवरः सरितं सः ।
चित्रकूटमगमन्नगराजं दर्शितोत्तमसृतिर्मुनिशिष्यैः ॥१०६

सञ्चरन् स शनकैः शनकैर्वाल्मी[illegible]समुपेतः ।
मित्रभावगतजन्तुकदम्बं ध्यानमा[illegible]न्दम् ॥१०७॥
लभ्यपुष्पफलपादपभेदं निर्मलाम्बु[illegible]खेदम् ।
सर्वकालसुखदं सपवित्रं निर्भयोच्चलितरङ्कुकलत्रम् ॥१०८॥

आश्रमान्तिकमुपेतमृषीन्द्रः
प्रत्युदेत्य रघुनाथममन्दम् ।
आनिनाय निजमालयमेनं
मानयन्स कृतकृत्यमिव स्वम् ॥ १०९ ॥

ऊचिवान् वचनमेतदृषिस्तं लब्धमद्य जनुषः सफलत्वम् ।
यत्त्वदङ्घ्रिकमले प्रसमीक्षे काङ्क्षिते परमयोगिदुरापे ॥११०॥
राम राम तव नाममहिम्नां जात ईदृगहमीश गरिम्णा ।
पूर्वमासमधमे मृगयूनां मध्यगः समुदये क्षितिदेवः ॥१११॥
एकदेति विपिने मुनिभिस्तैः रोधितैरहमवादिषि किं रे ।
रुध्यतेऽहमवदं सुतदाराद्यर्थमुक्तमथ तैर्मुनिजातैः ॥११२॥
पापकर्मफलभागसि किं त्वं तेऽथवेति परिपृच्छ्य विधत्स्व ।
उक्तमेतदथ तैरनुयुक्तैर्भोक्तृभिर्वृजिनभाक् त्वमसीति ॥११३॥
सन्निवृत्य चरणेषु मुनीनां प्राब्रवं प्रपतितो भवतो माम् ।
उद्धरन्त्विति मुनिप्रवरास्ते रामनाम विपरीतमदुर्मे ॥११४॥
रामचन्द्र जपतो मम मन्त्रं तारकं सुबहुकाल इहायात् ।
तैर्निवृत्य मुनिभिः पुनरेवोत्थापितोऽभवमहं किल नाकोः ११५

तेन मामिह वदन्ति हि वाल्मीकिं जना जगति नामत एव ।
अर्चितो निगदितो रघुनाथस्त्वेवमेव वदति स्म कवीन्द्रम् ११६
मन्निवास उचितं पदमूह्यं वेदितो मुनिरिरिति स्फुटमूचे ।
शान्तदान्तहृदयं तव राम सीतया सह निवासनिशान्तम् ११७
योगिनां कनकलोष्टसमानां निर्जिताखिलमदादिरिपूणाम् ।
सर्वलोकहितकर्मरतानां त्वन्निवास उचितानि मनांसि॥११८
गेहमेतदनवद्यमथोक्त्वा मध्यतोऽद्रिसरितोर्निजशिष्यैः ।
कारितानि मुनिना सदनानि राघवेप्सिततमानि वराणि ११९

परमविषयव्यावृत्तात्मा महामुनिदेशतो
वरतरगृहेषूच्चैर्गत्वा मुदा रघुवंशजः ।
जनकसुतया सार्द्धं भ्रात्राऽनुजेन मनस्विना
परिणतफलैर्विप्रानाशु व्रती समभोजयत् ॥१२०॥

श्रीरामो मुनिवरवेषधारकोऽपि
ग्रावान्ते कृतसदनोऽपि वन्यभोक्ता ।
कुर्वाणो मुनिचरितं तथापि लक्ष्म्या
संसेवे ध्वजकुलिशादिलक्ष्मपादः ॥१२१॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ चित्रकूटगमनो नाम चतुर्थः सर्गः ॥४॥

# पञ्चमः सर्गः ।

अथ भूपसमीपमागतो धृतरामोदितदुष्टवाचिकः ।
सुहृदेव सुमन्त्रमन्त्रभृदभिघातीव नृपेण लक्षितः ॥ १ ॥
स च पृष्ट उवाच भूमिपं तमसावासकृतोपवासकः ।
गुहमित्रसमाहृतैः फलैः रघुवीरः कृतभोजनः प्रगे ॥ २ ॥
अनुजेन च भार्यया समं बहुपातक्षीरशिरोजटा व्यधात् ।
वचनस्थगुहेन रक्षितो निशि सुप्तो धृतकार्मुकेषुणा ॥ ३ ॥
कुरु तात न दुःखमण्वपि नतिपूर्वं गदतीति मत्कृते ।
त्वयि देव समातृकेऽगमं रघुवीरेण विसर्जितस्ततः ॥ ४ ॥
विलपन्नथ भूमिपो ययौ महिषीधाम निकामपीडितः ।
रघुवीरवियोगभोगिना कुशलं क्वापि न दष्ट आप्नुवन् ॥ ५ ॥
क्षितिपोऽपि तयेति भाषितो नृपतित्वं भरताय सूनवे ।
मम दत्तमरण्यमात्मना भवता रोदिषि किं मुधा पते ॥६॥
वदति स्म नृपः प्रियामथो सुतविश्लेषकृपाणविक्षते ।
हृदये वचनं त्वयेरितं लवणायेत ममाद्य कोपने ॥७॥
सशुगन्धवचो भवत्कृतं महिले सत्यवति ध्रुवं मयि ।
इति हेतुतयेव भूमिपः सुतहूतिं प्रजपन् ययौ दिवम् ॥८॥

अवरोधवधूजनास्तदा रुरुदू राजशुगाकुलाकुलाः ।
रघुनाथवियोगदुःखिताः प्रथमं दुःसहवेदनातुराः ॥ ९ ॥
अथ पौरजना भृशं शुचा मुमुहुर्मीनगणा इवाजलाः ।
समवाप्य मनस्सु चेतनां प्रविलेपुर्नृपकीर्तिकीर्तनात् ॥१०॥
चतुरो चतुराननोऽथ चेन्न भवेद्रामवियोगदायकः ।
सति तादृशि तत्र मादृशां भवनीया कथमीदृशी व्यथा॥११॥
तव बुद्धिरियं विधे मनागवभातीव मनस्सु मादृशाम् ।
कुशलावसरे कथं भवेद्विपरीतो नहि चेत्प्रजापते ॥ १२ ॥
जलजातजने न जग्मिवान् सहजस्ते निजहेतुतागुणः ।
न हि चेन्महमध्य ईदृशी विपरीतैव कथं भवेन्मतिः॥१३॥
मतिरेव हि पूज्यते क्षितौ तदभावेन सतामियं कृतिः ।
रघुनाथललाटपट्टके विपरीतामलिखो लिपिं विधे ॥१४॥
विलपत्स्ववरोधवासिषु त्वितरेष्वित्थमुपेत्य याजकः ।
अवबोध्य जनान्मुनिः शवं तरणौ तैलयुजि व्यधारयत्॥१५।
भरतस्य स तूर्णमैरयत्सविधे वैवधिकं द्रुतङ्गमम् ।
नृपतेर्विधिनौर्ध्वदैहिकं सुविधातुं परलोकवासिनः ॥ १६ ॥
भरतोऽथ जगाम मातुलाच्छ्रुतवान् वैवधिकान्नृपोक्तिकाः।
नगरं प्रति सम्प्राति प्रगे मनसा दुःखयुतेन चिन्तयन्॥१५॥
तनयैः सहितस्य भूपतेः परिवारेण च सर्वदा शुभम् ।
भवतादिति भावयन्मुहुः प्रतिपेदे नगरं शुचाकुलम् ॥१८॥

प्रथमं निजमातुरालयं नृपहीनं गतमङ्गलोत्सवम् ।
स ददर्श दिवाकरोज्झितं व्यवहारैः रहितं दिनं यथा ॥१९॥
जननीं समुवाच साश्रयं समुदीक्ष्याम्ब नृपः क्व साम्प्रतम् ।
भवनं नगरं च पूर्ववन्नहि मे भाति किमत्र कारणम् ॥ २० ॥
जननी तमुवाच सादरं शृणु हे वत्स यथा मया कृतम् ।
गतवृत्तमचष्ट सर्वशो भरतोऽथ व्यथितोऽवदत्तराम् ॥२१॥
लपनं तव दर्शनोचितं प्रतिभात्यम्ब न रामविद्विषः ।
रघुवीरपराङ्मुखा नरा नियतं दुर्गतिवासभाजिनः ॥२२॥
रघुनाथपरे तवोदरे जननि प्राप्तवतो जनुर्मम ।
नरकेष्वनिवारिता मता वसतिश्चन्द्रदिवाकरावधिः ॥२३॥
न भयं यदि मेऽशुभे भवेद्रघुवीरस्य सुदुर्मते तदा ।
नरकार्तिभयं मनागपि न हि कुर्वीय स मातृघातजम् ॥२४॥
अथ रामकरे न मामकं पितराधाय करं कथं न्वऽगाः ।
अधुनाऽयमहं कुमातृको जनुषः पारमियामहो कथम् ॥२५॥
परिनिन्द्य स मातरं शनैः सदनं ज्येष्ठविमातुराययौ ।
शपथादि पपात तत्पदे विलपन्नश्रुजलाविलेक्षणः ॥२६॥
यदि पुत्र महीपसन्निधावभविष्योऽत्र तमादिदेश सा ।
इति तात तदेदृशी विपत् त्वभविष्यत्कथमस्मदादिषु ॥२७॥
समचष्ट वशिष्ठ इक्ष्वाक् शमयन् शोकममुष्य दुःसहम् ।
वचनैः स शुचोऽपनोदनैर्नृपतेः कर्त्तुमथोत्तरक्रियाम् ॥२८॥

अवबोधबलं महाबलं तदभावे गतिरीदृशी नृणाम् ।
शिवताखनिमेत्य मर्त्यतां शवतां यान्ति ज्ञतां विना नराः॥२९

गुरुरेव गुरुः प्रतीयते गुरुशब्देन न चापरः किल ।
उपदेशत एव केवलो भवति व्याहृतिरस्य दुरिछदा॥३०॥

सरिदोघपतन्महीरुहां मरुता योगवियोगकाविव ।
पितृमातृकलत्रपुत्रतां भजतां देहवतां स्वकर्मणा ॥ ३१॥

पुरुषं समुपैत्यनेहसि स्वकृतं कर्म पुरातनं यथा ।
स्व ऋतावनीरुहं फलं नृपसूनो परिदेविताऽत्र का॥ ३२॥

जहि शोकममुं महामते खरबोधासिवरेण दुःसहम् ।
यत एव हि मुग्धता भवेत् नुरवार्या तत एव संसृतिः॥३३॥

कुरु कार्यमथौर्ध्वदैहिकं जनकस्यामरलोकवासिनः ।
सुततेयमुदीरिता सता परलोकेतपितुर्यदर्हणम् ॥ ३४ ॥

मुनिनेत्थमुदीरितस्ततो भरतः श्राद्धमशेषतोऽकरोत् ।
गजवाजिमहीहिरण्यगोरथकुप्यांशुकरत्नमत्यजत् ॥ ३५ ॥

प्रणतः परितोष्य वाडवान् परमान्नेन सदक्षिणेन सः ।
परिभूय नृपासनं मनः सचिवैर्दत्तमधत्त राघवे ॥ ३६ ॥

भरतोऽथ जगाम धामतः सह साकेतनिवासिभिर्जनैः ।
श्रुतिनिष्ठवशिष्ठमृष्टशुगनुनेतुं जननीं विनाऽग्रजम् ॥३७॥

लपनेन लपन्रघूत्तमं हृदयेनापि तदङ्घ्रियुग्मकम् ।
गुहरक्षितमाययौ पुरं सह सैन्यैः परिचिन्तयन्नयम॥ ३८॥

कपटेन समुज्झितस्ततो नतमुत्थाप्य समालिलिङ्ग तम्।
परिकीर्त्य स साधु साध्विति प्रथमालिङ्गितरामवक्षसम्॥ ३९॥
अतरत्तरिभिः सुरापगां कपटोपाधिसुदुर्गमान्तिकाम्।
रघुनन्दननाम संगृणन् भरतः सैन्यसमन्वितः क्षणात्॥४०॥
स तु तीर्थनृपान्तिकाश्रमं मुनिवर्याङ्गिरसस्य केवलः।
समुपेत्य बहिःसुरक्षिताखिललोकः प्रणनाम तत्पदे॥४१॥
स्मृतकामदुहा महर्षिणा भरतस्यातिथिता कृता भृशम्।
सबलस्य तपस्विनो बलं तप एव प्रथितं किल क्षितौ॥४२॥
प्रययौ धरचित्रकूटकं भरतो रामपदेक्षणोत्सुकः।
कुलपूज्यवशिष्ठमग्रतो विनिधायावधवासिभिः सह॥४३॥
सुविलोक्य पुरोऽन्तरा स्फुरद्विरिगङ्के जलजादिचिह्नितम्।
रघुवीरपदं मुदान्वितं लुलुठे तेन गतत्रपेण तत्॥४४॥
समुदीक्ष्य समीपवर्त्तिनं भरतं सैन्ययुतं ससंभ्रमम्।
सशरं स शरासनं दधद्वदतिस्मेत्यनुजोऽग्रजं रुषा॥४५॥
रघुवीर करोम्यहं नु किं भरतस्त्वेष ससैन्य आगतः।
वचनात्तव राम सेनया सहितस्यास्य हतौ न मेऽद्भुतम्॥४६॥
इति वादिनमग्रजोऽवदत्तमसौ कार्यमकार्यमण्वपि।
सहसा न विचारमन्तराऽपसदैरप्यथ मादृशैः किमु॥४७॥
मतिमान्न कुनीतिमान्भवेत् कुमतेः संश्रयणादपि क्वचित्।
विदितः खलु शीतशीतलः फणिसङ्गादपि चन्दनद्रुमः॥४८॥

प्रसमीक्ष्य पुरोगमं गुरुं भरतस्याथ पदातिचारिणः ।
समुपेत्य कृतानती च तौ मुदमासेदतुरन्तरुत्तमाम् ॥४९॥
भरतं पदयोरुपागतं प्रणिधायोरसि संलिलिङ्ग सः ।
जननीमथ वीक्ष्य दुःखितो विधवावेशवतीमभूत्तराम्॥५०॥
तमृषिः समुवाच निर्गुणो निजमायाश्रित देहवानिव ।
प्रतिभाति भवान् हि केवलः श्रुतिभिर्मृग्यत एव नाप्यते॥५१॥
गुरुणेति स सान्त्वितोऽकरोज्जनकस्योत्तरकर्म राघवः ।
फलमूलजलैरदन्ति तत् पितरो यत्तनयैर्हि भुज्यते॥५२॥
भरतोऽथ करौ सुयोज्य तं समवोचद्वचनातिकोविदः ।
चल राम नृपासनं गुरोरधितिष्ठ प्रतिपालय प्रजाः ॥५३॥
वचनं कुरु चाश्रवस्य मे करुणासागर मा चिरं कृथाः ।
यदिदं विहितं कदम्बया विदितं मे न भवत्पदे शपे॥५४॥
इति वाक्यममोघमूचिवान् विररामाग्रजमार्यसम्मतः ।
कृतिनो मितभाषिणोऽमलाः प्रकृतेरेव भवन्ति कोमलाः॥५५॥
अनुजं परिसान्त्वयन्नयं स्मयमानो रघुनायकोऽवदत् ।
गुरुभाषितमावयोः सदा महनीयं कमनीयशीलवन्॥५६॥
प्रभुता जनकेन तेऽर्पिता विपिनं मेऽनृतभीतिमत्तया ।
श्रुतिधर्मविदा त्वया मया करणीयं किल शासनं पितुः॥५७॥
तनुजैरघभीरुभिर्गुरोः करणीयं वचनं हितेप्सुभिः ।
श्रुतिशास्त्रविदा पुरातनी श्रुतिरेषा परिगीयते सता॥५८॥

इति रामवचोऽर्थसारविद्भरतः प्रार्थ्य पटीरपादुके ।
वररत्नसमूहसन्धिते प्रभुतां कारयितुं निवृत्तवान् ॥५९॥
अनुनीय विनीय मानवान् विनिवर्त्य स्वगृहान्रघूद्वहः ।
परिदृष्टतदीयसाधुतागतवद्दुःखचयानदुःख्यभूत् ॥ ६० ॥

रघुवरवचनादवाप्तसंज्ञः
सपदि स नन्दिपुरं पुरोपकण्ठे ।
विषमिव विषयं त्यजन्नुपेत्य
नरपतिकर्म चकार भूशयानः ॥ ६१ ॥

छायाधर्मानुभाजाऽतनुवरवपुषा प्राप्तनैसर्ग्यभासा
स्वामिश्राव्याम्यवाचा विधुशुचियशसा विश्वविख्यातनाम्ना।
श्रीरामोऽप्यात्मरामो रुचिरतरुतटे चित्रकूटे शमापत्
सार्द्धं वृद्धानुसेवी वसतिमधिवसन् सीतया लक्ष्मणेन ॥६२॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ भरतप्रत्यागमनो नाम पञ्चमः सर्गः ॥ ५ ॥



# षष्ठः सर्गः ।

जनतापहाऽपि जनताभयतश्चलितुं स्फुटं नरवरोऽनवरः ।
समियेष दण्डकवने जनताऽजनताविधौ कृतमतिर्मनसा॥१॥
चलति स्म तद्गिरिवरादवरोऽवरजानुगो महिलया सह सः ।
चपलान्वितस्य मुदिरस्य हरन्ननुगामिहंसपततः सुषमाम् ॥२॥
सुजगाम राम उटजं मुनेर्विटपोल्लसद्विटपिचारुतरम् ।
निजवैरितोज्झितमृगादिवनं श्रुतिसारपाठपटुतेतबटुम् ॥ ३ ॥
मुनिरत्रिरादरपरो विदधेऽपचितिं समागतवतः सदने ॥
अनुजाबलासहितदाशरथेरियमेव रीतिरनघा हि सताम् ॥ ४ ॥
अनुसूयया जनकजा वसने त्वजरे विभूषणयुगं श्रवसोः ।
परिदाय कायहितरागमियं बहुमानिता दिनमुवास सुखम् ॥५॥
प्रग एव दाशरथिरात्तधनुर्वनिताऽनुजाग्रसर आश्रमतः ।
नमनं चकार गमनाय मुनेरनुसूययाऽथ सहितस्य द्रुतम्॥६॥
मुनिशिष्यदर्शितपथः प्रचलन् स नदीमगाधसलिलामगमत् ।
अवतीर्य तां तरिकया बटुकैरथ सार्द्धमाप परतीरमसौ ॥७॥
स निवर्त्यताननुव्रजद्बटुकान् समुदीक्ष्य लक्ष्मणमचष्टतमाम् ।
सगुणं विधाय स धनुः कुरुताज्जनकात्मजां तव ममान्तरतः॥८

चल दण्डकाख्यविपिनं सभयं चलदण्डजान्तरशिखण्डिचयम्।
मृगकीशशूकरमृगादनभृत् शशशल्लकीवृकशृगालवृतम् ॥९॥
चलतस्तथा वचनमुक्तवतोऽङ्गनयाऽनुजेन सहितस्य ततः।
पुरतो विराधनिकषातनुजो मनुजान्तकोऽन्तक इवाविरभूत्१०
भुजशीर्षशूलशिखरग्रथितामितमानवोऽमितबलः पिशितात्।
विकरालवक्त्रशितदन्तरुचा स्नपयन्निवावददसौ बत तान्॥११
कवलोपमा मम मुखे गमिता विधिना घृणाक्तमतिनाऽमतयः।
प्रकृतेर्ललामवपुषो मृदुला भवत स्थिरा अतिजडाः पुरतः॥१२॥
इति वादिनोऽभिमुखमापततो धृतशाखिनोऽस्य रघुवंशवरः।
करपादशीर्षमिषुभिर्न्यहरल्लघुहस्ततां प्रकटयन्नमिताम् ॥१३॥
तत उत्थितो वितिरयन् पुरुषो महसा दिशश्च विदिशः सहसा।
वदति स्म राममहमस्मि पुरा सुरगायकोऽतिकुशलो मधुहन्॥१४
गमितो दशामहमिमां मुनिना गिरिशांशजेन हसितेन विभो।
अधुना वरेण सदृशोऽजनि स त्वमगाः कथं नयनगोऽपरथा॥१५

नरके वसन्तमपि मां स्मरणं
न जहातु ते तव जनेऽस्तु रतिः।
स जगाम धाम निजमित्थमसौ
परियाच्य राममवनत्य विभुम् ॥ १६ ॥

पुरतश्चलन्स शरभङ्गमुनेर्विपिनं शरासनमिषुं च दधत्।
जनकात्मजानुजयुतः प्रबभौ पुरुषो यथा प्रकृतिजीवयुतः॥१७

शरभङ्ग उत्पुलकितोऽभिययौ रघुनाथमर्चितुमना विधिना ।
परिपूज्य तं सपदि चार्हणया कृतकृत्यतामगमदेव मुनिः ॥१८॥

मुनयोऽगमन् रघुवरं नृवरं
समुदीक्षितुं विपिनवासकृतः ।
समुदीक्ष्य तं समवदन् भगवन्
परिदृश्यतां विपिनमस्थिमयम्॥ १९ ॥

समयन्नयं मुनिभिराप्ततमैः समुदीक्षितु सह वनं सकलम् ।
सकपालमालमभिवीक्ष्य शिवासहितं स्मरन् शिवमभूदशिवः२०
कति वत्सरान् विगतमत्सरकैः सह तापसैरुषितवानुटजे ।
मृगया मिषेण मृगयन् दनुजाननुजानुगः स शरचापधरः॥२१।
तव राम मन्त्रजपनादभवं त्रिदशादिपूज्य उदितो मुनिना ।
शमनोऽपि सर्वदमनो न मनोविषयी कृतः किमिति ये त्वपरे।२२
स मुनीनुवाच शमयन् सुवचा वचसाऽतिदुःखमनिहार्यतमम्।
प्रतिजज्ञ आसरगणं पुरतो विनिहन्तुमन्तक इव प्रसभम्॥२३।
घटजन्मदर्शनसमुत्सुकितोऽचलदाशु चापशरवानरिहा ।
धनुषावभासिनवनीरदवन्मृगराजवल्ललितमन्दगतिः ॥ २४ ॥
घटजन्मनोऽनुजवनं ददृशे मनुजोज्झितं दनुजजातभयात्।
अनुजान्वितेन मनुजेन्द्रतनूजनिना जनाश्रयावियुक्ततमम्।२५
ससुतीक्ष्णतापसविदेहसुताऽनुजलक्ष्मणः प्रकृतिलक्ष्मणकः ।
प्रजिघाय कुम्भजवनं कदलीपनसाम्रनीपलवलीमदसौ ॥२६॥

उटजान्तिकस्थितवता प्रभुणा

पटुना सुतीक्ष्णबटुकः प्रहितः ।

मुनये निवेदितुमुपेत्य मुनिं

समुपागतौ समवदन्नृवरौ ॥ २७ ॥

शरदम्बुदाम्बुयुतमेघसमा-

वतिसुन्दरौ मुनिसुवेषधरौ ।

शरचापभूषिततनू तनुजा-

ववनीपतेररतिरतीशरुची ॥ २८ ॥

इति शिष्यवाक्यमनुकर्ण्य मुने-

र्बहिराजगाम तनुतः प्रमदः ।

कवलीकृताखिलकबन्धनिधे-

रपि रोमहर्षणमिषेण न मान् ॥ २९ ॥

कलशोद्भवः प्रतिययौ सफलः

सकलेश्वरं स्वकुटमापयितुम् ।

परिपूज्य तं निखिलपूज्यतमं

वनिताऽनुजान्वितमवाप सुखम् ॥ ३० ॥

निज आश्रमे समुपवेश्य मुनि-

र्मुनिवेषधारिणममुं मुदितः ।

परिभोज्य वन्यफलमूलचयैः

स नुनाव नव्यममलैर्वचनैः ॥ ३१ ॥

भगवन् भुवा सुरभिरूपभृता
दितिजादिभारपरिखेदविदा ।
विनिवेदितेन विधिना विधिना
प्रतिबोधितोऽभवदरं मनुजः ॥ ३२ ॥

अज एव शाश्वत उपाध्ययुतः
परिपूर्ण एक ऋतधामधरः ।
परिणामहीन उरुगीतयशो
न विनाशमेषि परतोऽपि परः ॥ ३३ ॥

परिपालनाय महतामहत-
प्रभुतोऽसतां हि निधनाय विभो ।
अवतीर्य कार्यमखिलं विदधन्
निजमाययाऽवनितले रमसे ॥ ३४ ॥

तव दर्शनेप्सुरहमासमहो-
बहुतामिहैव तपसे निवसन् ।
अभवच्च तन्मम महाभगता-
मनुवर्णये किममरासुलभम् ॥ ३५ ॥

हृदये वसत्वविरतं भगवन्
मम जानकीसहित एव विभो ।
इषुधी धनुस्तनशरे उररी-
कुरु सायकौ च रिपुसायकरौ ॥ ३६ ॥

पुरतो द्वियोजनपरे रुचिरा
क्षितिजापतेऽस्ति किल पञ्चवटी ।
गमनं कुरुष्व वसतो भवत-
स्तत एव भाव्यमखिलं भविकम् ॥ ३७ ॥

इति बोधितो रघुवरो मुनिना-
ऽगमदाशु मध्यवनितः पुरतः ।
अनुगानुजोऽध्वनि निवर्त्य मुनिं
सहगामिनं सविनयं शनकैः ॥ ३८ ॥

समटन् विलोक्य गिरिकूटनिभं
स जटायुषं विकटचञ्चुपुटम् ।
कपटेन पक्षिवपुषं दितिजं
कलयन् शरं समदधाद्धनुषि ॥ ३९ ॥

स जटायुराशु रघुनाथमथो
वदति स्म तेऽस्मि जनकस्य सखा ।
इति वेदितो रघुवरः पतगं
सममानमत् सविनयं पितृतः ॥ ४० ॥

समया शिवस्य जटया जनितां
तटिनीं पपाट किल पञ्चवटीं ।
स जटास्फुरत्तरललाटतटः
परिवीतचीरपटसिंहकटिः ॥ ४१ ॥

विदधेऽनुजेन रमणीयतरं
भवनं निशान्तविधये पटुना ।
अनुगोदमाशु सुरराजगृहा-
दपि चारुनिर्मितिवहं विभुना ॥ ४२ ॥

कुरुते स्म तत्र गमनागमनं
जनकात्मजा तदुभयान्तरतः ।
रसनेव दन्तवसनान्तरिता
पतिदेवतार्चनरता परमा ॥ ४३ ॥

अनुगोदमद्रिशिखरे विपिने
सरितो महातरुवरे पुलिने ।
मृगयाऽपदेशवशतो मृगयन्
मनुजाधिपो विनयाति स्म रिपून् ॥ ४४ ॥

कुलिशातपत्रसृणिपद्मयव-
ध्वजलक्ष्मभिश्चरणयोरवनीम् ।
रघुनायकोऽथ सुषमाऽवधिभिः
पदकैरबूभुषदलङ्करणैः ॥ ४५ ॥

असती समीक्ष्य किल शूर्पणखा
पुलिने पदानि रघुवंशमणेः ।
वशमाययौ रतिपतेः सपदि
स्वरभङ्गकम्पपुलिकाक्ततनुः ॥ ४६ ॥

रुचिरां विधाय जनमोहितनू-
मुटजाद्बहिर्गतवती पिशितात् ।
न सुकेशिकाऽपि कचतो हि समा
जितरम्भिकोरुरुचितोऽथ यतः ॥ ४७ ॥

न तिलोत्तमापि तलतः सदृशी
न घृताच्यपि प्रपदतो नखतः ।
जितमेनका कुचयुगेन यतो
वचसोर्वशी न सदृशी सुभृशम् ॥ ४८ ॥

वदति स्म राममभि शूर्पणखा
त्वमुरीकुरुष्व निकटोपगताम् ।
स्वयमेव मामपरथा मदनो
विशिखेण हन्ति भवतोनु कृते ॥ ४९ ॥

मम सङ्गमेन सुखलेशमपि
क्वचिदाप कापि ललना वशिनः ।
बहिरस्ति ते समुचितोऽवरजो
गदितेति तेन बहिराप च सा ॥ ५० ॥

प्रभुणेरिता तव समीपमगा-
मुररीकुरु त्वमतनुज्वरिताम् ।
अव मा त्वदङ्गपरिरम्भसुधा-
श्रितजीवितामम रवैद्यरुचे ॥ ५१ ॥

इति वादिनीं प्रतिजगाद कृती
कुशलेऽनुयायिनमवेहितमाम् ।
नृपतेरिमं किमु सुखं भविता
पुनरेव गच्छ तममन्दमते ॥ ५२ ॥

पुनरायतीं समभिवीक्ष्य सुता
जनकस्य तामथ जहासतमाम् ।
प्रकृतिं समेत्य विनिहन्तुमनाः
पिशिताशनाऽभिसरति स्म च सा ॥ ५३ ॥

कथितोऽनुजो विकृतये प्रभुणा
निकषात्मजामतिशितेन तदा ।
असिना सगन्धवहकर्णयुगो-
ल्लवनात् चकार विकरालतमाम् ॥ ५४ ॥

अथ दूषिताऽस वदनात् पिशिता-
द्रुत भूषितापि खरदूषणयोः ।
सति दूषणानि हि विधातुमनाः
स्वयमेव दूषणफलं लभते ॥ ५५ ॥

जगदे तया त्रिशिरसा सहितः
स खरोऽथ दूषणयुतः प्रखरम् ।
अनिमित्ततोऽकृत दशामियती-
मिति लक्ष्मणोऽग्रजवचोभिरलम् ॥ ५६ ॥

खरदूषणत्रिशिरसो वचनं
तदुदीरितं समवकर्ण्य रुषा ।
सममादिशन्त निधनाय रिपो-
रयुतं चतुःसमधिकं स्वबलम् ॥ ५७ ॥

रजनीचराः रुरुधिरे सदनं
रघुनायकस्य यमराट्सदृशः ।
शलभा यथैव दवहव्यभुजं
निधनाय पक्षसहिता अहिताः ॥ ५८ ॥

इति लक्ष्मणं समवदन्नृपति-
र्जनकात्मजां त्वमुटजेऽव भयात् ।
अहमेव राक्षसगणं सकलं
विशिखैर्नयामि शमनस्य सदः ॥ ५९ ॥

इति राघवः समुदीर्य ययौ
कलशोद्भवात्तशरचापधरः ।
अभितो निशाचरबलं तरसा
मकरालयं मकरराज इव ॥ ६० ॥

अथ राक्षसा रघुवरं विशिखैः
समवाकिरञ्छिततरैरभितः ।
धरणीधरं जलधराः सलिलै-
रिव वेपथूज्झितममन्दतराः ॥ ६१ ॥

दलिताः शरा अरिभिराप्रहिताः
रघुवीरबाणनिकरैः पतिताः।
विधिना हताः अकृतपुण्यनरै-
र्विहिताभिलाषनिवहा इव ते ॥ ६२ ॥

क्षणमात्रतोऽथ तिमिरारिबलं
शकलीचकार रविदाशरथिः ।
किरणेषुभिर्वियतिचारि समं
रजनीचरं भुवनशान्तिकरः ॥ ६३ ॥

प्रखरेषुणा स कुपति स्म खरं
त्रिशिखेषुणा त्रिशिरसं दनुजम् ।
विपिनं सदूषणमथो व्यदधा-
द्गतदूषणं रघुपतिर्विशिखैः ॥ ६४ ॥

सुमनोगणा ववृषुरम्बरतः कुसुमानि रामशिरसि प्रसभम् ।
दिवि वादिता विबुधदुन्दुभयोऽप्सरसां गणाः ननृतुरभ्रपथे॥६५

श्रीरामो राक्षसोत्थं मुनिमनुजभयं शाश्वतं सन्निवार्य
स्वाराजाद्यैः सुरौघैर्मुनिभिरथ नतैः स्तूयमानः स्तवाग्रैः ।
तूणोपासङ्गपृष्ठः करकलितधनुः श्यामलः कान्तमूर्त्तिः ।
नेत्रोपान्तैर्मुनीन्द्रान्निजमुटजमसावागतो वीक्ष्यमाणः॥६६॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ खरादिवधो नाम षष्ठः सर्गः ॥ ६ ॥

# सप्तमः सर्गः ।

समायान्तं समालोक्य राघवं राघवोऽनुजः ।
प्रत्युज्जगाम सम्प्रीत्या पिपासुरिव पुष्करम् ॥ १ ॥
पञ्चवट्या अटव्याश्च कण्टकीभूतराक्षसान् ।
निर्हत्यैवं स काकुत्स्थो भूषयामास तत्स्थलम् ॥ २ ॥
भुक्तावशिष्टान्दिवसान् विश वह्नौ पतीरिता ।
तिष्ठोटजे छायया त्वमिति सीता तथाऽकरोत् ॥ ३ ॥
राक्षसोपद्रुतजनं जनस्थानं जनाश्रयात् ।
चकार जानकीजानिरन्वर्थमिव तत्पुनः ॥ ४ ॥
विघ्रा शूर्पणखा याता घातयित्वा खरादिकान् ।
लङ्कां शोणितपङ्काङ्कामिव कर्तुं विहायसा ॥ ५ ॥
दशाननाग्रे पतिता सभायां विकृतानना ।
विलपन्त्यश्रुनयना ज्यायांसमलपच्च सा ॥ ६ ॥
पानासक्तस्य मूर्खस्य स्त्रीजितस्याल्पमेधसः ।
चारचक्षुर्विहीनस्य राज्ञो राज्यं विनश्यति ॥ ७ ॥
शक्तिसिद्धित्रिगुणोपायोदयहीनस्य भूभृतः ।
प्रमादिनो निहीनस्य राज्यं नश्यति कामिनः ॥ ८ ॥

इति श्रुत्वा दशग्रीवो ग्रीवामुन्नम्य तद्वचः ।
उवाच भद्रे ब्रूहि त्वमभद्रकरणं कुतः ॥ ९ ॥
अवीवदत् शूर्पणखा मुखमाच्छाद्य पाणिना ।
अयोध्याधिपती राजा नाम्ना दशरथः स्मृतः ॥ १० ॥
पुत्रौ तस्य समायातौ जनस्थानमरिन्दम ।
पितुराज्ञां पुरस्कृत्य विद्धि त्वं रामलक्ष्मणौ ॥ ११ ॥
तव स्वसारं मां ज्ञात्वाऽनुजो ज्येष्ठस्य शासनात् ।
दशामेतां समनयद्ययाऽऽस्यं छाद्यते भृशम् ॥ १२ ॥
द्वितीया तस्य चार्वङ्गी त्रिषु लोकेषु रावण ।
अद्वितीयाऽस्ति हर तां प्रसभं पुरुषो यदि ॥ १३ ॥
तदालापं समाकर्ण्य हलाहलसमं गुणैः ।
स्वीचक्रे तां समाबोध्य स्वकार्यं सोऽन्वपद्यत॥ १४ ॥
बलवन्तं रिपुं ज्ञात्वा बलात्काराक्षमोऽसुरः ।
मारीचमिव सिंहार्त्तं मारीचमगमद्रहः ॥ १५ ॥
आह स्म सत्कृतस्तेन राक्षसं तं स राक्षसः ।
कपटेन मृगो भूत्वा पट पञ्चवटीकुटीम् ॥ १६ ॥
मोहयेः राघवं नोचेद्धन्मि त्वामसिनाऽमुना ।
बलाबलं स निश्चित्योमित्युक्त्वा मरणे ययौ ॥ १७ ॥
तपनीयमृगो वज्रशृङ्गो वैदूर्यलोचनः
रत्नत्वग्विद्रुमशफो मायया राघवाश्रमम् ॥ १८ ॥

रावणोऽपि गृहायागादागामीश्वरतान्तकः ।
परीतं विपरीतं वा जानन् पर्याकुलेन्द्रियः ॥ १९ ॥
कुरङ्गो रञ्जयन् भूमिं रुचा चारुतराङ्गकः ।
जयन्नन्यकुरङ्गाग्र्यान् वृद्धगङ्गातटेऽपटत् ॥ २० ॥
हरिणः सोऽचरत्साग्रा हरिता हरिता नवाः ।
हरितायामुत्तरस्यां गोदाया हरितोरणे ॥ २१ ॥
उटजान्ते तमद्राक्षीदटन्तं जातु जानकी ।
छेकं कर्त्तुममुं चैच्छत्सर्वरत्नमयं मृगम् ॥ २२ ॥
अथाबभाषे श्रीरामं सीता सृमरलोभिता ।
धृत्वाऽर्पय पते मह्यं क्रीडार्थं रत्नरोहिषम् ॥ २३ ॥
माऽऽग्रहं कुरु वैदेहि गृह्यकं कर्त्तुमेतकम् ।
मायाविनश्चरन्त्यत्र यथा शूर्पणखा शुभे ॥ २४ ॥
विधातृसर्गे क्वापीदृक् न दृष्टो न श्रुतो मृगः ।
रामेणोक्तेति सोचेऽमुं पुनर्देहीति साग्रहम् ॥ २५ ॥
ततो रामः स इष्वासं गृहीत्वा सेषुधिं गृहात् ।
तं राममनुसर्तुं हि समेत्यानुजमाजगौ ॥ २६ ॥
मत्तः शृणु महावीर यत्तः संरक्षणे भव ।
दनुजेभ्यः प्रजावत्या इत्युक्त्वाऽनुजगाम तम् ॥२७॥
दृश्यते लीयते क्वापि क्वचिदुत्प्लुत्य गच्छति ।
एवं जहार रामं तं स रामो योजनान्तरे ॥ २८ ॥

तं मायाविनमासाद्य स मृगं लक्ष्मणाग्रजः ।
आकर्णाकृष्टबाणेन जघानोरसि साम्प्रतम् ॥ २९ ॥
हा लक्ष्मणेति निनदन् लक्ष्मणाग्रजलक्ष्मणा ।
लक्ष्मणाग्रजबाणेन विद्धो भूमौ पपात सः ॥ ३० ॥
श्रुत्वा तं निनदं सीता भीता मायाविनो मृगात् ।
गच्छ लक्ष्मण साहाय्यं कर्त्तुं भ्रातुर्महामृधे ॥ ३१ ॥
इत्युक्तोऽसौ तयोवाच देवरो मधुराक्षरैः ।
मायाविनो राक्षसस्य निनदं विद्धि भामिनि ॥ ३२ ॥
राघवे प्रहरिर्धातुः प्रत्ययं याति कर्त्तरि ।
भावे चापि शुभाचारे न कर्मणि कदाचन ॥ ३३ ॥
तथापि चाग्रहात्तस्या लक्ष्मणोऽगाद्गतिं हरेः ।
धनुषो रेखया रक्षां विधायोटजमार्गतः ॥ ३४ ॥
दृष्ट्वाऽग्रजोऽनुजं प्राप्तं नोचितं कृतमुक्तवान् ।
तेन सार्धमथागच्छत्पर्णशालां शनैः शनैः ॥ ३५ ॥
दशाननः समासाद्य छिद्रमेतज्जटा दधत् ।
पटुः कषायपटवान् कपटे चोटजेऽविशत् ॥ ३६ ॥
कुण्डीं बिभ्रद्दण्डपाणिर्दण्डिरूपं विडम्बयन् ।
वेतण्डशुण्डादोर्दण्डः पाखण्ड इव मूर्त्तिमान् ॥ ३७ ॥
भिक्षां देहीति प्रोच्चार्य रेखातो बहिरास्थितः ।
गृहाध्यक्षं प्रतीक्षस्व सीतयेत्युदितो यतिः ॥ ३८ ॥

गोदोहमात्रं यतिनां स्थितिर्गृहिगृहे श्रुतिः।
एषा पुराणीति जगौ यत्किञ्चिद्दीयतामनः॥ ३९॥
फलमूलान्युपादाय बहिर्याता यदा सती।
तस्मा अर्पयितुं भिक्षां भिक्षवे स्वं जिघृक्षवे॥ ४०॥
तदानीं कुं विदार्यायं ससीतां स्यन्दनेऽद्रवत्।
आरोप्याकाशमार्गेण श्वा पात्रीमिव हाविषीम्॥ ४१॥
क्रोशन्तीं तां लक्ष्मणेति नीयमानां विहायसा।
दृष्ट्वा जटायुस्तिष्ठेति तं वदन्नभिजग्मिवान्॥ ४२॥
त्रोट्या सनखया तस्य रथं चूर्णितवान् खगः।
रिष्टिना तेन निहतः पक्षतौ निपपात कौ॥ ४३॥
वियता नीयमाना सा वस्त्रखण्डेन भूषणम्।
आमुच्याद्रिवसच्छाखामृगेषु स्वाङ्कमाक्षिपत्॥ ४४॥
अथाशोकवने शोकान्वितां सीतां ररक्ष सः।
अधिलङ्कं राक्षसीभिः संवृते शिंशपातले॥ ४५॥
यदर्थमवतारो मे तत्कार्यमविचारतः।
कार्यमेवेत्यात्मगतं रामोऽथागमदाश्रमम्॥ ४६॥
मैथिलीरहितं दृष्ट्वा शिथिलोऽभूद्रघूत्तमः।
प्लुतपोतो वणिगिव गतश्रेयसमाश्रमम्॥ ४७॥
प्रकृत्याऽविकृतो रामोऽनुजं वीक्ष्य विलप्य सः।
तामन्वेष्टुं ययावग्रे विरही प्राकृतो यथा॥ ४८॥

पतितं शोणिताक्लिन्नं पक्षिणं वीक्ष्य राघवः ।
रक्षो मत्वेति प्राह स्म धनुरानय लक्ष्मण ॥ ४९ ॥
रावणेन रणेनेमां प्रापितोऽहं दशां विभो ।
त्वदर्थं कण्ठगप्राणः प्राणाँस्त्यक्ष्यामि तेऽग्रतः ॥ ५० ॥
रावणेन हृता सीता नीता लङ्कां प्रति प्रभो ।
इत्युक्त्वा राघवं स्तुत्वा तत्पदं गतवान् खगः ॥५१॥
तं दग्ध्वा हरिणान्हत्वा जटायुःप्रीतये हरिः ।
दाक्षाय्यैरादयत् क्रव्यं प्रेतोऽस्ति ज्ञातिवक्रतः ॥५२॥
ततो व्रजन् सानुजोऽसौ राघवो विपिनं महत् ।
कबन्धभुजयोर्मध्ये प्राप्नोति स्मेव बन्धनम् ॥ ५३ ॥
योजनायतयोः रामलक्ष्मणौ सुविचक्षणौ ।
असिभ्यां चिच्छिदाते तौ तद्भुजौ दक्षिणेतरौ ॥ ५४ ॥
अष्टावक्रेण मुनिना हसितेनास्मपः कृतः ।
गन्धर्वोऽस्मि हतो वृष्णा वज्रेणापि हि नो मृतः ॥५५॥
अमरत्वात् कुक्षिशिरा योजनायतबाहुकः ।
शापान्तश्च कृतस्तेन त्वद्धस्तहननावधिः ॥ ५६ ॥
सर्वं सम्पन्नमद्यासीच्छ्रीराम तव दर्शनात् ।
स स्वोदन्तं तमुक्त्वैवं गन्धर्वोऽगात्त्रिविष्टपम् ॥ ५७ ॥
तदुक्तसीतोदन्तोऽसौ जहे पम्पासरोवरम् ।
पद्मिनीपत्रापिहितं स्थलं मारकतं यथा ॥ ५८ ॥

पद्मशङ्खोत्तरश्रीकं लसन्मकरकच्छपम् ।
श्रीदपुण्यजनावासमलकानगरायितम् ॥ ५९ ॥
चक्रपद्माश्रयत्वेन बदरीकाननालयात् ।
भुवनाधारकत्वेन ध्रुवं नारायणायितम् ॥ ६० ॥
व्यालित्वान्नगवासित्वात् सदा रुद्राक्षधारणात् ।
नीलकण्ठाश्रयत्वेन कामदं शङ्करायितम् ॥ ६१ ॥
श्रियं दधन्मुनीन् बिभ्रन्नगालि गजताकुलम् ।
हरीन्दधानं मधुरं समुद्रादधिकं श्रिया ॥ ६२ ॥
सानुजं जानकीजानिं शबरी मुनिकिङ्करी ।
निनाय स्वाश्रमपदं विश्रामाय श्रमाकुलम् ॥ ६३ ॥
पादौ पाद्येन तस्याथ प्रक्षाल्योदकमात्मनः ।
जग्राह शिरसा साश्रु शबरी साधु किङ्करी ॥ ६४ ॥
श्रुतिभिर्मृग्यते यत्तत् प्राप हीनाऽपि सा जनैः ।
भक्त्या केवलया लभ्यो हीश्वरोऽनन्ययाऽर्चितः ॥६५॥
सानुजं पूजयामास श्रीरामं शबरी मुदा ।
स्वादून्यखादयत्तेन फलानि बदराणि च ॥ ६६ ॥
न कुलेन न शीलेन विद्यया नापि तीक्ष्णया ।
स तथा लभ्यते रामो यथा भक्त्या ह्यनन्यया ॥ ६७ ॥
ऋष्यमूको गिरिवरो योजनात्परतः प्रभो ।
तत्रस्थैर्वानैरर्लभ्या सीतावार्ता सहेतुका ॥ ६८ ॥

चिरप्रार्थितलब्धस्य पश्यतस्तव साम्प्रतम् ।
पुरो हास्यामि हे राम कलेवरमिदं प्रभो ॥ ६९ ॥
इत्युक्त्वारुह्य शबरी चित्यां तत्याज विग्रहम् ।
स्मरन्ती तं समाधाय पश्यन्ती च समागतम् ॥ ७० ॥
शबरीमनुकम्प्याथ पम्पासम्पादिताह्निकौ ।
ददृशाते धरायां तौ धरस्थैर्वानरैर्नरौ ॥ ७१ ॥
ग्रीवामुन्नम्य सुग्रीवो मारुतिं व्याहरत्तराम् ।
गत्वा वाडवरूपेण बुध्वा बोधय मां नरौ ॥ ७२ ॥
वालिमायानरौ तौ चेद्भ्रूविकारेण बोधयेः ।
यदि शुद्धौ शुभाचारौ तौ ज्ञात्वाऽऽगत्य सूचयेः ॥७३॥
वायुसूनुरथागत्य बटुर्भूत्वा गिरा पटुः ।
तत्पृष्टोदन्तरामोक्तस्वोदन्तोऽगाद्धरीश्वरम् ॥ ७४ ॥
अयोध्याधिपती राजा पिता दशरथो रथी ।
तदाज्ञया वनं यातौ ससीतौ रामलक्ष्मणौ ॥ ७५ ॥
तत्र पौलस्त्यमुषितां सीतामन्वेष्टुमागतौ ।
तन्मित्रतोपसम्पन्नकार्यवत्ताऽस्ति वां परा ॥ ७६ ॥
इत्यादिश्य सखित्वेनाञ्जनेयेनाग्निसाक्षिणा ।
योजितौ परया मत्या क्षितीश्वरकपीश्वरौ ॥ ७७ ॥
तदुदन्तश्रुतिकृतप्रतिज्ञो हन्तुमाहवे ।
वालिनं राघवोऽपृच्छदत्रानागमकारणम् ॥ ७८ ॥

सुग्रीवोऽप्यवदद्रामं दुन्दुभिर्दुन्दुभिस्वनः ।
आह्वयन्महिषाकारो वालिनं कलयेऽसुरः ॥ ७९ ॥
वाली स पातयित्वा तं शिरो हृत्वा सश्रृङ्गकम् ।
चिक्षेप तत् पपातात्र मतङ्गाश्रमसन्निधौ ॥ ८० ॥
शप्तस्तेनर्षिणा चात्र यद्यागन्तासि नो भवेः ।
ततो वाल्यगमादत्र नगे तिष्ठामि निर्भयः ॥ ८१ ॥
विरोधहेतुं वक्ष्येऽहं सहेतुं तेन वालिना ।
मायाविना समाहूतो मयपुत्रेण सोऽन्यदा ॥ ८२ ॥
वाली बलावलेपेन बलवान् निःसृतो गृहात् ।
न्यगृह्णान्मयजं सोऽथ विवेशाशु बिलं गिरेः ॥ ८३ ॥
पश्चात्तमनुविष्टस्य तस्य मासाद्गताद्बिलात् ।
निर्गच्छताऽसृगोघेन मतो वालिवधोऽनुगैः ॥ ८४ ॥
महत्या शिलयाऽऽच्छाद्य वैवरं मुखमागतैः ।
अनिच्छन्मन्त्रिभी राज्येऽभिषिक्तोऽस्म्यहमाग्रहात् ॥८५॥
हत्वा रिपुं बलाद्वाली बिलान्निःसृत्य वेगतः ।
बबाधे मां पुरीमेत्य तेनागामगमं नगम् ॥ ८६ ॥
सप्ततालानसौ वाली निष्पत्रान् कुरुतेऽञ्जसा ।
एकेन दोष्प्रहारेण तस्यैतत्पौरुषान्तरम् ॥ ८७ ॥
पत्त्रिणैकेन सच्छिद्रान् तान्करोषि यदा तदा ।
समरे समरश्लाघिन् श्रद्दधे तद्वधं त्वया ॥ ८८ ॥

विहस्य राघवेणाथ क्षिप्तः पत्री तृणाधिपान् ।
भित्त्वा सभूमिकानेत्य तूणे प्राग्वदवस्थितः ॥ ८९ ॥
दृष्ट्वा राममनायासं लज्जितः क्षम्यतामिति ।
वदन् स्तुत्वा हरिस्तस्य पपात पदयोरधः ॥ ९० ॥
तमुत्थाप्यावदद्रामस्तं गत्वाऽऽह्वय वालिनम् ।
मैत्रीं ते सफलां मित्र करिष्यामीति मा शुचः ॥ ९१ ॥
अथाहूतागतो ज्येष्ठोऽनुजेन युयुधे सह ।
समाकारतया रामो नामुञ्चत्पत्रिणं परे ॥ ९२ ॥
मुष्टिपिष्टागतममुं रुदन्तं प्रेक्ष्य राघवः ।
मालया कण्ठलम्बिन्या सहैनं प्रैरयत्पुनः ॥ ९३ ॥
पुनरागत्य संश्लिष्टौ निरीक्ष्य युधि तौ हरिः ।
अवन्मित्रमहञ्छत्रुं नागोष्ट्रविधिनेषुणा ॥ ९४ ॥
वृक्षखण्डे लीयमानं वाली वीक्ष्य रघूत्तमम् ।
साक्षेपमेनमवदत् किं चोर इव माऽवधीः ॥ ९५ ॥
किं कार्यमकरोद्राम सुग्रीवो न मया कृतम् ।
वृथैव ते श्रमो भाति न भक्ष्यं वानरामिषम् ॥ ९६ ॥
ऐषिष्यं चेदहं राम लङ्कामुत्तोल्य साधिपाम् ।
त्वत्पादाग्रेऽक्षेप्स्यमेव सर्वथाऽनुचितं कृतम् ॥ ९७ ॥
ब्रुवन्तमेवं तं रामोऽवदत् क्रोधारुणेक्षणः ।
न क्षत्रियः परबलात् परं जेतुं समीहते ॥ ९८ ॥

वयं खलसमाकीर्णे भ्रमामो विपिने कपे ।
संरक्षणाय साधूनामितरेषां वधाय च ॥ ९९ ॥
वाली ज्ञात्वा रमाकान्तं स्तुत्वा नत्वा पुनः पुनः ।
तं वीक्ष्यमाणस्त्रिदिवं जगाम जगतां पतिम् ॥ १०० ॥
अङ्गदो यौवराज्येऽथ स्थापितो वालिनः पदे ।
सुग्रीवो राघवेणेव त्वस्तेर्भूरार्द्धधातुके ॥ १०१ ॥
जनकवचनलक्ष्यादागतो दण्डकाद्यं
विपिनमहरदुग्रं भारमस्याः रसायाः ।
अनुजसहितवासः प्रादिके वर्षणाद्रौ
सजलजलधरश्रीर्लक्ष्मणो लक्ष्मणेड्यः ॥१०२॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ वालिवधो नाम सप्तमः सर्गः ॥ ७ ॥



## अष्टमः सर्गः ।

अथ गिरौ निवसन् जलदागमे
विरहिणां समये विपदागमे ।
परिददर्श कबन्धभरं वरे
स जलदं जलदच्छविरम्बरे ॥ १ ॥

निजगदे जगदेकमहात्मना
त्ववरजोऽवरजोचितसम्पदा ।
घनरवो नरबोधनतत्परः
स्वसदने सदने कलयानुज ॥ २ ॥

त्वमवलोकय वीर सितच्छदान्
घननिनादभयाच्चलितच्छदान् ।
स्वनिलयाय समुत्सुकमानसान्
परिचितप्रमदप्रदमानसान् ॥ ३ ॥

त्वमनुपश्य नभस्यधराङ्गनं
कुटजपुष्पमिलद्भ्रमराङ्गनम् ।
विविधपुष्पितशाखिकदम्बकं
स्वरसमोदितभृङ्गकदम्बकम् ॥ ४ ॥

अधिशिलीन्ध्रमरन्दमसावली
मुदिततां तनुते सरसावलीम् ।
समयजो महिमा न विहन्यते
बलवतापि हि शात्रवहन् यते ॥ ५ ॥

जलधरावलिरावृणुते वपु-
र्दिनमणेः रजनीनृपतेर्वपुः ।
कमलकैरवगन्धहरो मरुत्
द्युनिशबीजवितानकरोऽमरुः ॥ ६ ॥

प्रियगिरोऽपि विलोकय मौनताः
परभृताः दधतेऽकलमौनताः ।
प्लवगणान् समुदीक्ष्य वदावदान्
न समयो न इतीव वदावदान् ॥ ७ ॥

जलमुचोऽनुरुवन्ति शिखण्डिन-
स्त्वचलसानुनि चित्रशिखण्डिनः ।
विदधते नियमान् सुसमाधयः
परिगताङ्गिककामसमाधयः ॥ ८ ॥

अनुज बोधय सूरसुतं हरिं
जलधरा गतवन्त इति स्फुटम् ।
धवलिमा ह्यभवत्सलिलाशये
कलशजोदयजोदयवान् क्षितौ ॥ ९ ॥

जनकजाऽऽस्यसमोऽपि न मन्मुदे
विधुरयं तिरयँस्तिमिरं दिशाम् ।
कुमुदबन्धुरपि ह्रादिनीपते-
रुदरजो दरजो गद इत्यभूत् ॥ १० ॥

मलयजातनयोऽनुससार तद्
रघुवरप्रहितोऽहितभास्करिः ।
कपिवरेण परं परिपालितं
हरिपुरं रिपुरञ्जनशीलिना ॥ ११ ॥

तमवलोक्य पुरः पुटभेदने
कृतकपाटपिधानसुदुर्गमे ।
कपिवराच्छवराः समवस्थिताः
नियुतशोऽयुतशो धृतपादपाः ॥ १२ ॥

कपिवरानवलोक्य स लक्ष्मणः
करगृहीतशरासनसायकः ।
सपदि भेत्तुमनाः पुरमास्थितो-
ऽधृत रसां तरसाऽस्य कियत्पुरम् ॥ १३ ॥

समवलोक्य तथाविधलक्ष्मणं
कपिपतिं सकलत्रतनूद्भवम् ।
धुरि निधाय तदङ्घ्रितलेऽपतत्
पवनभूर्वनभूतहरिव्रजैः ॥ १४ ॥

प्रशममाप ककुत्स्थकुलोद्भवः
प्रणतितः कुपितो नितरामसौ ।
चरणतः खनति स्फुटमङ्घ्रिपा-
ननमतो नमतो न नदीरयः ॥ १५ ॥

प्रणिजगाद हरीशमहीश्वरः
शरदियं समुपागतवत्यपि ।
जनकजापरिमार्गविचक्षणा
न कपयोऽकपयो गमितास्त्वया ॥ १६ ॥

तमवदत्सभयं रविनन्दनो
दिशि दिशि प्रहिताः कपयो मया ।
दशदिनावधयश्चलिता इतो
हरिवरारिविरार्दनविक्रमाः ॥ १७ ॥

स युवराजहरीश्वरजाम्बव-
द्धनुमतो विनिधाय पुरःसरान् ।
रघुवरान्तिकमागतवान् बली
बलवतो लवतो हरिदन्तगान् ॥ १८ ॥

रघुपतेर्वचसा हरिणेरिताः
प्रतिदिशं हरयो बलवत्तराः ।
जनकजापरिमार्गविधौ रताः
समरयामरयानगतीश्वराः ॥ १९ ॥

पवननन्दनवालिजजाम्बव-
न्नलमुखाः कपयो विमलाशयाः ।
कलशयोनिदिशि प्रहिता रुचौ
रविसमा विसमा गगने गतौ ॥ २० ॥

पवनजस्य करे रघुनन्दनो
जनकजापरिपाति विभूषणम् ।
हरिसुतात्तमतो मणिमुद्रिकां
निहितवान् हितवानयमित्यलम् ॥ २१ ॥

अथ दिशो विदिशश्च वलीमुखा
गिरिसमाञ्जनपुञ्जनिभा द्रुतम् ।
कपिशवर्णधराः कनकोज्ज्वला
गजबला जवला हरिमाययुः ॥ २२ ॥

दशदशोत्तरलक्षगुणावधी-
भबलशालिशिलाङ्घ्रिपशस्त्रिणः ।
हरितवर्णनिभा नियुतायुता
अरुणभाऽरुणभानुकलेवराः ॥ २३ ॥

निषधविन्ध्यहिमालयसम्भवा
मलयमन्दरमेर्वचलादिजाः ।
दिविषदंशभवा नखरायुधा
घनरवा नरवाचि विचक्षणाः ॥ २४ ॥

कपिवरा युवराजमुखाः स्थितं
पथि निरीक्ष्य निशाचरमद्भुतम् ।
दशमुखोऽयमिति प्रबबाधिरे
नखरदैः खरदैर्गतजीवितम् ॥ २५ ॥

अथ ययुर्विवरेण तृषातुराः
कपिवरा नगरीमनरैर्युताम् ।
अबलया तदुपश्रुतवार्तया
निगदिता गदितात्मसुवृत्तया ॥ २६ ॥

व्रजत रावणपालितपत्तनं
जनकजामवलोकयतोदधेः ।
परतटे त्रिजटानिकटे स्थितां
विधिवशाधिवशामिति वानराः ॥ २७ ॥

गिरिदरीषु लतापिहितास्वपि
पुरि पुरीन्द्रपुरीसदृशि क्षितौ ।
निबिडपादपवत्सु सरस्स्वपि
सरससारससारसवत्स्वलम् ॥ २८ ॥

मकरमीनवतीषु नदीष्वपि
मृगयतां विपिनेऽपि वनौकसाम् ।
अविदतां जनकस्य सुतां बहू-
न्यगवरेऽगवरे दिवसान्ययुः ॥ २९ ॥

अनुययुः प्लवगा जलधेस्तटं
जनकजापरिमार्गधृतव्रताः ।
अनवलोक्यमगाधमपारगं
सजलजं जलजन्तुभिराकुलम् ॥ ३० ॥

तरलतुङ्गतरङ्गसमुच्छ्वस-
ज्जलदुरासदरोधसमर्पितम् ।
त अभिवीक्ष्य बभूवुरलं जडाः
अथ विषादविषादनतो ध्रुवम् ॥ ३१ ॥

वरमृतिः प्रबभूव जटायुषो
रघुवरप्रमदार्थगतायुषः ।
श्रुतवलीमुखवागिति गृध्रराट्
तदनुजो दनुजोऽग्र्य इवासरत् ॥ ३२ ॥

हरिगतानुजवृत्तसमुद्भवात्
रविकुलोद्भवरामकथामृतात् ।
रविकराहतपक्षबलोऽपि यो
ऽनिजबलो जवलोऽभवदाशु सः ॥ ३३ ॥

कपिवरानवदत्पतगेश्वरः
कुरुत यत्नमिहोदधिसम्प्लवे ।
जनकजोपवने परिदृश्यते
स सुलभोऽसुलभोऽपि हि यत्नतः ॥ ३४ ॥

उदधिसम्प्लवने प्लवगोत्तमाः
समवदन् दशयोजनकावधीः ।
नलसुषेणमुखाः प्लवनक्रियाः
गतिवरातिवरा अपि नाधिकाः ॥ ३५ ॥

अवदद्दृच्छपतिर्जलधिप्लवे
बलमिहास्ति ममार्धमिते गतौ ।
परतटावधि वालिसुतोऽवदत्
प्रगमनं गमनं न ततोऽधिकम् ॥ ३६ ॥

पवननन्दन जोषमिहासि किं
कपिवरा अवदन्निति मारुतिम् ।
तव बलेन वयं समुपागताः
परमते रमते त्वयि विक्रमः ॥ ३७ ॥

पवनजः प्लवगानिदमब्रवीत्
प्रभुरहं जलधिक्रमणे नहि ।
रघुवरार्पितमुद्रिकयाऽनया
कमलधिर्मलधिः किमु दुष्क्रमः ॥ ३८ ॥

अथ महेन्द्रगिरेः शिखरं ययौ
जलधिसम्प्लवनाय मरुत्सुतः ।
रघुवराङ्घ्रियुगं मनसा स्मरन्
रिपुरदं पुरदण्डयितुः प्रियम् ॥ ३९ ॥

सकरपादसमुन्नमनं मुदा
श्रवणनेत्रविकुञ्चनमाशुगिः ।
चरणयुग्मतलाक्रमिताचलं
दिवि ययौ विययौ स गिरिः क्षितौ ॥ ४० ॥

वियति रामकलम्ब इव व्रजन्
सुरसया कृतवीर्यपरीक्षकः ।
कृतगतागततल्पनान्तरः
पवनजो वनजोदरमध्यगात् ॥ ४१ ॥

यदभिधानजपात् किल मानवो
भवति दुर्गभवार्णवपारगः ।
रघुवरस्य सहोर्मिकया हरे-
र्भुवनधेर्वनधेस्तरणं कियत् ॥ ४२ ॥

धुरि ददर्श नगर्यधिदेवतां
कपिवरो वनितालमिताकृतिम् ।
करतलेन च तामतिताडय-
न्ननुविवेश विवेशपुरीमरेः ॥ ४३ ॥

मृगयता त्वधिलङ्कमनुक्षणं
प्रतिगृहं रघुवंशमणेः प्रियाम् ।
हनुमतोपवनं गतमन्तरा
द्रुमलताऽमलतामरसाकरम् ॥ ४४ ॥

उपवने तदशोकतले कपि-
र्जनकजामवलोक्य कृशां स्थिताम् ।
तमवलम्ब्य तनूकृतविग्रहः
स च ननाम न नामकुले गृणन् ॥ ४५॥

दशरथात्मज उत्तरकोशला-
परिवृढो वचसाऽऽगतवान् पितुः ।
जनकजाऽनुजयुग्विपिनं महत्
तदनुगो दनुगोत्रजहाऽस्म्यहम् ॥ ४६ ॥

इति वदन्नददात्करमुद्रिकां
रघुवरस्य स हूतिलिपिं कपिः ।
रवितनूजसखस्य शिवात्मनो
दशशिरोऽशशिरोहरणोद्यतः ॥ ४७ ॥

अमृतमिष्टतमः फलसञ्चयो
मुदितया जनकात्मजयाऽर्पितः ।
हनुमता बुभुजे मुदितात्मना
हरिवरेण वरेण वरीयसाम् ॥ ४८ ॥

प्रभुवचोऽधिककार्यकरो वर-
स्त्विति धियेव समीरतनूभुवा ।
उपवनं सकलं विनिपातितं
बलवता लवतादृशकालतः ॥ ४९ ॥

श्रुतवलीमुखपादपभञ्जन-
प्रतिघयुक्तदशाननोदितः ।
अगमदक्ष उरश्छदसंवृतै-
रसहनैः सह नैर्ऋतसञ्चयैः ॥ ५० ॥

तमवलोक्य करोद्धृतपादपो
गजघटाभनिशाचरसञ्चयम् ।
हरिरिवैष जघान मरुत्सुतः
स तरुणा तरुणार्कसमद्युतिः ॥ ५१ ॥

तदवधार्य दशाननदेशिताः
घननिनादमुखाः रजनीचराः ।
चलितवन्त इवाद्रिसमुच्चयाः
सुकपिशाः कपिशातनकर्मणे ॥ ५२ ॥

गतवतः समुदीक्ष्य स राक्षसान्
करसमुद्धृतदीर्घमहीरुहः ।
समपतत्प्रहरन्नसुरेष्वसौ
सुमहिमा महिमानमिवेक्षयन् ॥ ५३ ॥

मघवजित्पवनात्मजयोर्महान्
कलिरभूद्बलिवासवयोरिव ।
शरवरागमुचोर्युधि युध्यतोः
सनदयोर्नदयोरिव गर्जतोः ॥ ५४ ॥

कपिवरं समुदीक्ष्य बलाधिकं
द्रुहिणदैवतमस्त्रमथाददे ।
युधि बबन्ध च तेन सुरेन्द्रजित्
पवनजं वनजं प्लवगं यथा ॥ ५५ ॥

पवनजो द्रुहिणास्त्रगुरुत्वतो
निजबलस्य परीक्ष्यतया पुनः ।
स्वयमगात्खलु संयततामसौ
हनुमतोऽनुमतो न पराक्रमः ॥ ५६ ॥

पितृसमीपमनीयत मारुति-
र्घननदेन निपात्य निशाचरान् ।
तमवलोक्य जगाद स रावणो
जहि रिपुं हि रिपुञ्जय मा चिरम् ॥ ५७ ॥

कपिरयं बलवानिति भात्यतो
न वधमर्हति मोच्यतमोऽङ्कितः ।
इति बिभीषणवागवसानतः
प्रमदतो मदतोयनिधिर्नृपः ॥ ५८ ॥

प्लवगपुच्छमलं वसनैर्दृढं
समुपवेष्टयतेत्यवदत्तराम् ।
विदधिरे च तथैव निशाचराः
विधिकृताधिकृतानलदीपनम् ॥ ५९ ॥

पवनभूर्नगरीमनुपुप्लुवे
प्रतिगृहं न बिभीषणमन्दिरम् ।
प्रदहति स्म पुरं वसनाग्निना
त्रिपुरकं पुरकण्टकवच्छरैः ॥ ६० ॥

तनयदारसमीरितहारवं
विविधहेषितबृंहितपूरितम् ।
चटचटारवपूर्णदिगन्तरं
समदहन्मदहज्ज्वलनः पुरीम् ॥ ६१ ॥

हुतभुजा लिलिहेऽभ्रलिहाऽर्चिषा
दशमुखाश्रवताश्रयिणाऽपि पूः ।
जनकजान्तरितान्तरवत्तया
निमिषतो मिषतोऽसुरभूभुजः ॥ ६२ ॥

अधिपयोधिजलं निजपुच्छकं
पवनजः परिशम्य पयोनिधिम् ।
जनकजां प्रणिपत्य ततोऽतरत्
ह्यनुचरस्य चरस्य हरेः किमु ॥ ६३ ॥

सुरपसूनुसुतादिहरीश्वरैः
समनुवर्णितकीर्तिरसौ सह ।
उपययौ रघुवंशमणिं कपि-
र्नरवरं रवरञ्जितभास्करिः ॥ ६४ ॥

नत्वा श्रीरामचन्द्रं पवनतनुभवो व्याहरद्वाचमुच्चै-
र्दृष्टा सीता प्रसादात्तव धरणिपतेऽभञ्जि वन्या निकामम् ।
दग्धा लङ्का समग्राऽवधि नृपतनयस्तुर्यसैन्येन साकं
जेतव्या शीघ्रमेव प्लवगबलवता श्रीमता राक्षसीपूः ॥६५॥

इत्युदीर्य स समीरनन्दनः
सीतयाऽर्पिततमं शिरोमणिम् ।
प्रज्वलन्तमददात् प्रतीतये
राघवाय स गिराऽऽर्चयत्कपिम् ॥ ६६ ॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ सीतादर्शनो नाम अष्टमः सर्गः ॥ ८ ॥

---

# नवमः सर्गः।

रघूत्तमोऽवोचदथो कपीशं
लङ्कामलं कामयते हृदेतुम्।
विधीयतां मित्र भवद्भिरत्र
प्रयाणकालोचितयत्न आशु ॥ १ ॥

हनूमता यत्कृतमद्य कार्यं
करिष्यते नैव कदाचिदन्यैः।
अलङ्घि सिन्धुर्यदलङ्घ्यपारः
पुरी च लङ्काऽनलसात्कृता यत् ॥ २ ॥

अहं च सौमित्रिरयं त्वमेते
मरुत्सुतेनैव सुरक्षिता हि।
अतोऽत्र किं देयमिति ब्रुवँस्तं
रामः समालिङ्गितवान् कपीशम् ॥ ३ ॥

ममाक्षि दक्षं स्फुरति प्रकामं
स्फुटं भविष्यत्यचिरेण कार्यम्।
तवापि का मित्र विचारणाऽस्ति
वदेति सुग्रीव उवाच चोक्तः ॥ ४ ॥

नीलर्क्षराजद्विविदास्तथाऽन्ये
सुषेणतारौ पवनः प्रयान्तु ।
पुरो गवाक्षो गजमैन्दकीशौ
पार्श्वद्वये यान्तु वलीमुखाद्याः ॥ ५ ॥

नलो हनूमज्जनकः प्रयान्तु
पृष्ठेन कामं रभसो हरीशाः ।
आरुह्य वातात्मजमाशु गच्छ
तवानुजो वालिसुतं च यातु ॥ ६ ॥

इतीरिताः सूरसुतेन कीशाः
कीनाशतुल्याः रिपुमर्दनेषु ।
रेजुश्चलन्तोऽचलदीर्घदेहाः
समीरवेगाः समरप्रगल्भाः ॥ ७ ॥

आरूढकीशो रघुनन्दनोऽभात्
मेरुस्थनीलाद्रिरिवाबभासे ।
सौमित्रिणाऽधिष्ठितवालिसूनुः
शृङ्गस्थशुक्रागसुमेरुतुल्यः ॥ ८ ॥

शाखामृगाच्छादितभूमिभागः
समासदत्सागरतीरमाशु ।
रामश्चलन् वायुसुताधिरूढो
द्वितीयरत्नाकरवद् बलौघैः ॥ ९ ॥

रावणोऽपि निजमन्त्रिणोऽवदत्
त्वेककेन कपिना विनाशितम् ।
काननं जनकजा विलोकिता
भस्मसादकृत पूर्गतं पुरात् ॥ १० ॥

ऊचिरे त्वथ घटोदरादयो
वानरोऽयमिति किं करिष्यति ।
नः प्रमादवशतो गतोऽभयो
नान्यथा कथमपि व्रजेदितः ॥ ११ ॥

इन्द्रजेतृतनयोऽब्रवीत्ततं
त्वाज्ञया जगदमर्त्यवानरम् ।
कर्तुमीहितमिदं त्वदीयया
मामकीनमिति दुःखितं क्षणात् ॥ १२ ॥

कुम्भकर्ण इति वाचमुक्तवान्
मैथिलीं यदहरद्भवानयम् ।
दुर्नयोऽस्य फलितं फलं महत्
बोभुजीतु सतनूजबान्धवः ॥ १३ ॥

जानकीं यदहरद्विमूढधी-
रंहसोऽस्य शमनं तदर्पणम् ।
स्वापतेयसहितं कनीयसे-
त्युक्त आह दशकन्धरः स्म तम् ॥ १४ ॥

शात्रवोऽसि मम निःसराघवन्
पत्तनात् तमवधीत् क्रुधा पदा ।
सोऽप्यगाद्धरिपदेन वर्त्मना
मन्त्रिणश्चतुर आदधत्ततः ॥ १५ ॥

अन्तरिक्षग उवाच राघवं
लक्ष्मणाग्रज बिभीषणोऽस्मि सः ।
अग्रजेन चरणेन ताडितं
विद्धि मां शरणमागतं तव ॥ १६ ॥

राघवेण तदुदीरितेन तं
चानिनाय कपिभिर्बिभीषणः ।
आधिपत्य अधिलङ्कमादरा-
ल्लक्ष्मणेन सहसाऽभिषेचितः ॥ १७ ॥

रामसैन्यमवलोकितुं शुकं
प्राहिणोद्दशमुखोऽनु सारणम् ।
तौ गतौ हरिपदेन वर्त्मना
वानरैश्च विधृतौ प्रताडितौ ॥ १८ ॥

राम राम परिरक्ष वानरा-
द्वादिनाविति निवार्य वानरान् ।
दर्शनाय हनुमान् प्रणोदितो
राघवेण कपिभल्लसेनयोः ॥ १९ ॥

तौ निधाय तलयोः स्वहस्तयो-
दर्शितौ निजबलं हनूमता ।
मोचितौ रघुवरेण शापतः
कुम्भजन्मजनितात् स्वसैन्यतः ॥ २० ॥

तौ समेत्य दशकन्धरं बलं
सन्निवेद्य समतीतसङ्ख्यकम् ।
प्राप्य काननमथो तयोः शुको
मौनधर्ममनु सारणो ययौ ॥ २१ ॥

समुद्रं समालोक्य रामोऽविलङ्घ्यं
करेणाग्रहीच्चापबाणं सकोपः ।
पदेनैव पारं नयाम्येष सैन्यं
वदन्नीदृशीं कीशभूपाय वाचम् ॥ २२ ॥

क्रुधा रक्तनेत्रं धनुर्बाणहस्तं
क्षितीशं त्रसन् वारधीशो निरीक्ष्य ।
नृरूपं विधायाशु तत्पादपद्मे
निपत्य प्रकम्प्याबभाषे विनीतः ॥ २३ ॥

जडत्वेन सर्गे पुरा निर्मितोऽहं
त्वयैवेश सीतापते त्वां जडत्वात् ।
न जाने क्षमस्व प्रतारे प्रकारं
वदाम्येष तेनैव गन्तासि पारम् ॥ २४ ॥

तदीयापकाराकुलर्षिप्रदत्तै-
तदास्पृष्टपाषाणनीरच्छदत्वः ।
नलस्तेन संस्पृष्टपाषाणसङ्घैः
प्लवङ्गाहृतैर्बध्यतामत्र सेतुः ॥ २५ ॥

हसन् रामचन्द्रोऽब्रवीत् सिन्धुनाथं
मदीयः शरो निष्फलो नैव जातु ।
मदीयप्रदेशस्थ आभीरवृन्दे
शरः पात्यतां क्रूरकर्मण्यधीश ॥ २६ ॥

ततः प्रार्थितः पत्रिणा सिन्धुनैवं
तमाभीरवर्गं निपात्याब्धितीरे ।
शिवं विघ्नदावानलं लोकशोका-
द्रिदम्भोलिमास्थापयामास रामः ॥ २७ ॥

कपीशा निदेशस्थिता राघवस्य
समानीय शैलान् परे गण्डशैलान् ।
नलेनाशु ते स्पर्शयित्वा गभीरे
समाचिक्षिपुस्तोयधेस्तोयमध्ये ॥ २८ ॥

अनेकैर्दिनैर्दीननाथो हरीन्द्रै-
र्बबन्धेश्वरः सेतुमम्भोधितोये ।
पथा तेन सेनामसङ्ख्यामधृष्यां
समुत्तारयामास पारे पयोधेः ॥ २९ ॥

समाहूय सुग्रीवमुग्रप्रतापः
पतिं रक्षसां मन्त्रदक्षं विनीतम् ।
तथा जाम्बवन्तं समाजे महान्तं
बभाषे वदन्त्वत्र किं कर्तुमिष्टम् ॥ ३० ॥

प्रयात्वङ्गदो रावणं बोद्धुकामः
पुरीं राम लङ्कामशङ्कं प्रवक्ता ।
इति प्रार्थितस्तैर्विनीतैर्नयज्ञै-
स्तथा तत् स कामं चकाराशु रामः ॥ ३१ ॥

अथाङ्गदोऽगादधिलङ्कमायतां
सभां समुत्प्लुत्य सरावणादिकाम् ।
विलोक्य रक्षःपतिना स भाषितः
कुतश्च कस्येति च कस्त्वमागतः ॥ ३२ ॥

समुद्रतीराज्जनकात्मजापते-
र्हितैषिदूतस्तनयोऽस्मि वालिनः ।
अरेर्विमूढोऽसि पितुर्विघातिनो
ऽभवश्चरस्तस्य न जीवघातुकः ॥ ३३ ॥

महामते त्वत्तनयस्य घातिनो
ग्रहीष्यसे त्वं त्वचिरेण वैरिताम् ।
इतीरितां वालिसुतेन भारतीं
निशम्य गर्वान्तरितामुवाच सः ॥ ३४ ॥

न मे सुरेशादपि पाशिनो न मे
न मे कुबेरादपि मे न कालतः ।
न वायुतो मे न च वह्नितो भयं
न चामरेभ्यः किमु वानरात् नरात् ॥३५॥

मदीयसेनासु न गण्यते कपिः
समेत्य दग्ध्वा नगरीं स तावकीम् ।
निहत्य पुत्रं च विनाश्य काननं
गतः पुरः पश्यत एव तेऽभयः ॥ ३६ ॥

प्रदृश्यतामेष कपिः समागमत्
वचो निशम्येति प्रहस्तकोऽङ्गदम् ।
स मुष्टिनैकेन शिरस्यहन्नमुं
पपात कृन्ताङ्घ्रितरुर्यथैव सः ॥ ३७ ॥

ततोऽङ्गदो भूमितले निजं पदं
निधाय लङ्केशमशङ्कितोऽब्रवीत् ।
पदं समुत्थापय चेद्बलं न चेत्
प्रयच्छ रामाय सवित्तजानकीम् ॥३८॥

ततः समुत्थाय स रक्षसां पतिः
पदं समुत्थापयति स्म बाहुभिः ।
चचाल चेलुश्च धरा धराधराः
न वालिपुत्रस्य पदं मनागपि ॥ ३९ ॥

कृतप्रयत्नस्य पदप्रचालने
दशाननस्यानमतोऽपतद्भुवि ।
किरीटमादाय तदद्भुतं कपि-
र्विहायसाऽभ्येत्य विभोरथार्पयत् ॥ ४० ॥

किरीटमादाय करेण राघवो
बिभीषणस्याथ शिरस्यधाद्दरेः ।
गुरुं समुत्तार्य दशाननस्य किं
पुरो भरं मित्रशिरस्यरोपयत् ॥ ४१ ॥

रघुकुलपनिदेशवर्तिभिस्तैः
प्लवगवरैः पुरदुर्गमुग्रवीर्यैः ।
युवनृपकपिराजजाम्बवद्भि-
रिव रुरुधे मधु माक्षिकासमूहैः ॥ ४२ ॥

अथ विमलमतिर्बलं स्वकीयं
व्यधित चतुर्विधमेव गोपुरेषु ।
सुरपतियमपाशिराजराज-
प्रभुषु दिशासु नखाश्मपादपास्त्रम् ॥४३॥

युवनृपतिमथानु जाम्बवन्तं
पवनसुतं च सहात्मनाऽधिपं सः ।
अकृत कृतिचतुर्विधे बलौघे
हरिरजनीचरलक्ष्मणानुगम्यः ॥ ४४ ॥

हरिसुतसुतमाल्यवत्प्रहर्त्रोः
रणमभवत्तुमुलं रदास्त्रपातम् ।
अथ भुवि विनिपात्य वालिसूनू
रजनिचरं शिथिलं पुनर्भवेन ॥ ४५ ॥

उरसि परिविदार्य वीर्यशाली
निशिततरेण मुमोच मङ्क्षु वीरः ।
तदनुचरबलं रदैः पराग्रैः
खरनखरैर्विलयं निनाय चायम् ॥४६॥

घटजककुभि जाम्बवान् प्रजह्रे
सबलमहोदरवीरमाशु वीरः ।
करतलनखतीक्ष्णदन्तघातैः
कुलिशधरः कुलिशैरिवाद्रिवर्गम् ॥ ४७ ॥

वरुणककुभि मेघनादचाप-
प्रहितशिलीमुखषट्पदैरजस्रम् ।
पवनजमुखपद्ममध्यरक्त-
रसविभवः परिपीत आजिमध्ये ॥ ४८ ॥

अगणितवृषजेतृबाणवृष्टिः
पवनसुतोऽस्य रथं पदा रुरोज ।
तदनुगरजनीचरान्निहत्य
पुनरुपसृत्य जघान जत्रुदेशे ॥ ४९ ॥

सुरपतिजितमाशु मुष्टिना तं
धरणितले स पपात मूर्च्छितोऽसौ ।
पुनरपि न जघान तं हनूमान्
अपरकराद्धि किलास्य मृत्युरास्ते ॥५०॥

धनपतिदिशि गोपुराद्दशास्यो
बहिरुरुसैन्ययुतः समेत्य रामम् ।
अनुजहरिबिभीषणादियुक्तं
विशिखचयैर्निशितैस्तिरोधिताग्र्यैः ॥५१॥

रघुपतिरविरस्त्रभानुजालै–
ररिशरजालतुषारमाशु भित्त्वा ।
दशदशविशिखैर्जघान तीक्ष्णैः
सामिति तदा किल चैकमेकमेव ॥५२॥

अथ दशवदनोऽनलास्त्रमुग्रं
व्यमुचदनेकपतत्समन्ततोऽर्चिः ।
अशमयदनु तद् रघुप्रवीरः
सलिलमुगस्त्रवरेण वारुणेन ॥ ५३ ॥

अमुचदथ समीरणास्त्रमेषः
प्रशममिदं पवनाशनास्त्रकेन ।
अनयदतितरां महास्त्रवेत्ता
रघुतिलकः समितावनन् प्लवङ्गान् ॥५४॥

अथ पशुपतिदेवताकमस्त्रं
त्रिदशरिपू रघुपुङ्गवे ससर्ज ।
अशमयदथ तेन वैष्णवेन
कुशलतरेण तदस्त्रमाशु रामः ॥ ५५ ॥

सुरपतियमनैर्ऋतादिकास्त्रं
सुररिपुणा प्रहितं स कौशलेयः ।
अशमयदथ वैष्णवेन भूयः
खलु तदिदं सकलास्त्रनाशकेन ॥ ५६ ॥

गजगवयगवाक्षमैन्दनील-
द्विविदसुषेणनलादिवानरौघैः ।
उपलविटपिभिः प्रहारदक्षै-
र्निधनमनीयत रक्षसामनीकम् ॥ ५७ ॥

अथ सुरपतिजेतृलक्ष्मणाभ्यां
विशिखवरैः शलभैरिवान्धकारम् ।
जगति घनतरैरकारि तीक्ष्णै-
र्वलयितचापविनिर्गतैरभीक्ष्णम् ॥ ५८ ॥

असृजदथ भुजङ्गपाशमुग्रं
घननिनदः किल बन्धनाय तस्य ।
अशमयदथ गारुडास्त्रतोऽमुं
विशिखचयैर्निजघान तं च वीरः ॥ ५९ ॥

रथतुरगधनुः सयन्तृ बाणै-
रभिनदुरः स च पत्रिणा सुरारेः ।
दशवदनसुतः पपात भूम्याम्
असुरपतेः खलु सम्पदा सहैव ॥ ६० ॥

अथ रथतुरगप्रवेशनासा-
सुषिरनिरुद्धमरुत् घटश्रवा हि ।
वरशयनतलात्समुत्थितः स-
न्नवददसौदशकन्धरं शयालुः ॥ ६१ ॥

शयनसुखविनाशनं किमर्थं
कृतमिति तं निजगाद रावणोऽपि ।
जनकनृपसुतानिमित्ततो मे
तनुजतदात्मजभृत्यसङ्घनाशम् ॥ ६२ ॥

अकृत नरवरः सहायकीशो
जहि तमरं परिपन्थिनं सपक्षम् ।
कृतमनुचितमस्य पाकभोगं
कुरु बत सोऽप्यवदत्तदेति कामम् ॥ ६३ ॥

इति वचनमुदीर्य कुम्भकर्णः
सपदि ययौ समराय रामचन्द्रम् ।
कति विटपमृगान् पदाऽवमृद्नन्
करगतवानरसैन्यमाशु जक्षत् ॥ ६४ ॥

धरणिधरमिवाऽपरं चलन्तं
महदपि सैन्यमपासरत् कपीनाम् ।
प्रसरतरकरं विदीर्णवक्त्रं
समभिसरन्तमुदीक्ष्य कुम्भकर्णम् ॥६५॥

गजगवयमुखान् मुखे कपीशान्
अकिरदसौ चरणेन काँश्च मृद्नन् ।
श्रवणनयनतस्तथाऽस्य नस्त-
श्चपलतराः कपयो विनिर्गतास्ते ॥६६ ॥

विहितनतिरहं बिभीषणस्ते
स बहु मया प्रतिबोधितोऽग्रजोऽपि ।
नहि बहु मनुते स्म मद्वचोऽसौ
विधिहतभाग्यनरो विरुद्धकारी ॥ ६७ ॥

चरणतलगतं निराचकार
प्रणतिपरं स मां पदा प्रताड्य ।
तदवधि रघुनाथदासदास्यं
समभिलषन् समुपाजगाम मान्य ॥६८ ॥

अवरजमभिवीक्ष्य वाचमुच्चैः
त्वमपसरापसरेत्युवाच वीरः ।
न खलु मम परापरज्ञताऽस्ति
त्वमसि कुले सलिलप्रदोऽवशिष्टः ॥६९॥

अहमपि रघुवंशकेतुबाणा-
वलिसुरसिन्धुवगाहपूतकायः ।
गतिममरदुरालभां लभेय
प्रतिहतकिल्बिषराशिरात्तकामः ॥ ७० ॥

इति गदितवचाः स कुम्भकर्णः
सतरुकरोऽभिससार रामचन्द्रम् ।
गिरिरिव बृहदेकशृङ्ग आजा-
ववनितलं परिकम्पयन् पदेन ॥ ७१ ॥

अभिमुखपततोऽपसव्यबाहुं
रजनिचरस्य समाच्छिनत् स रामः ।
द्रुततरमिषुणा यथेक्षुकाण्डं
द्विरदकरोपममर्धचन्द्रकेन ॥ ७२ ॥

पुनरभिसरतोऽस्य सव्यबाहुं ।
धृततरुमाच्छिनदाक्षिगोचरस्य ।
कृतपटहरवस्य रामचन्द्रः
कुशलतरस्तिलकाण्डवच्छरेण ॥ ७३ ॥

पुनरतिरभसस्य संमुखस्य
रजनिचरस्य मुखं दरीसमानम् ।
शितशरनिचयैश्चकार पूर्णं
शरधिमिवापरमाशु कौशलेयः ॥ ७४ ॥

प्रियतमशयनस्य राक्षसत्वं
द्विजवरशापवशाद्गतस्य रामः ।
परमकरुणया महाशयं सः
व्यतरदरं विशिखैरमुष्य तीक्ष्णैः ॥ ७५ ॥

अथ दशवदनो निकुम्भिलायाम्
अगमदजय्यरथं शुचेः समीप्सुः ।
हवनसमुचितप्रकारवत्याम्
अनलमनल्पहविर्भिराशु यष्टुम् ॥ ७६ ॥

उदगमदथ धूमराशिरग्ने-
र्दशवदनप्रहुतैः समित्तिलाद्यैः ।
अवददनुविलोक्य तं यवीयान्
दशरथसूनुमिदं विशेषदृश्वा ॥ ७७ ॥

यदि हवनमिदं समापितं स्यात्
दशवदनेन भवेदसावजय्यः ।
रघुवर कुरुतात्तदन्तरायं
कपिभिरनर्थकरैरनल्पवीर्यैः ॥ ७८ ॥

इति निगदित एव रामचन्द्रो
युवनृपतिं गदति स्म गच्छ वत्स ।
कुरु झटिति तदन्तरायमेभिः
कपिभिररेर्हवनस्य वालिसूनो ॥ ७९ ॥

अहमहमिकया गतैः प्लवङ्गैः
सह स च वालिसुतो जगाम वीरः ।
अरिहवनविनाशनाय सद्यः
कृतकरतालरवैः प्लवद्भिरुग्रैः ॥ ८० ॥

युवनृपतिरथो निकुम्भिलास्थं
विटपमृगैः समुपेत्य रावणं तम् ।
दशनकररुहाङ्घ्रिपैः प्रताड्य
क्रतुमकरोन्निहतं वलीमुखाग्र्यः ॥ ८१ ॥

अथ सवसदनात्समुत्थितोऽसौ
सपदि जघान वलीमुखान् स्रुवेण ।
जहुरथ कपयोऽपि तं प्रदेशं
किलकिलशब्दकृतोऽङ्गदादिकास्ते ॥ ८२ ॥

स्यन्दने समुपविश्य रावणो
वारितोऽपि मयकन्यययाऽचलत् ।
सेनया समरयोधिरक्षसां
सार्धमात्मसमयाऽवशिष्टया ॥ ८३ ॥

स्यन्दनस्थमवलोक्य रावणं
भूमिगं च रघुनन्दनं वृषा ।
मातलिं रथयुतं समादिशत्
राघवान्तिकमगात् स सत्वरम् ॥ ८४ ॥

वासवप्रहितमञ्जसा रथं
सायुधं समवलोक्य राघवः।
आरुरोह सनिषङ्गचापभृत्
तिग्मरश्मिरिव पूर्वपर्वतम् ॥८५॥
रावणोऽनुजमवेक्ष्य कोपितः
प्राहिणोदमलशक्तिमान्तिकात्।
तां विलोक्य किल लक्ष्मणः शरै–
राच्छिनद्ध्रियति तैलकाण्डवत् ॥ ८६ ॥
राक्षसोऽथ दशभिर्भुजैर्दधत्
कार्मुकानि दश चाक्षिपच्छरान्।
वानरान् समभिवीक्ष्य ते पुन-
र्गात्रमाशु सुविदार्य निर्गताः ॥८७॥
वानरा अपि शिलातलाङ्घ्रिपान्
चिक्षिपुर्दशशिरोरथोपरि।
लाघवेन तिलशः शरैः स तान्
आच्छिनत् पुनरताडयद् भृशम् ॥ ८८॥
विक्षतान् दशदिशः पलायितान्
तानुवाच मयनन्दिनीपतिः।
मा द्रवन्तु कपयो न हन्मि वो
ह्रीर्घ्नतोऽपि मम जायते हि वः ॥ ८९ ॥

मच्छराहतिभयार्दिता भृशं
शेकुरभ्रमुधवादिदिग्गजाः ।
स्थातुमात्मककुभासु नैव ते
सेश्वरा अपि कुतोऽपरे पराः ॥ ९० ॥

लक्ष्मणोऽपि सकपीश्वरः स्थिरः
स्तादहं रघुवरं समाह्वये ।
यद्भ्रुवो विचलनेन वारिधि-
र्बद्धतामगमदाशु वानराः ॥ ९१ ॥

इत्युदीर्य दशकन्धरः शरैः
राममेव पिहितं चकार सः ।
सोऽपि तत्प्रहितबाणसञ्चयं
चाच्छिनद्द्विगुणसायकैः समम् ॥ ९२ ॥

रावणस्य च रघूद्वहस्य च
प्रोद्बभूव कलहस्तयोर्महान् ।
यं विलोकयितुमागताः सुराः
ब्रह्मवासवमुखाः ससिद्धकाः ॥ ९३ ॥

साधु साध्विति वचोऽब्रुवन् सुराः
नेदृशो हि समरो विलोकितः ।
नैव भाव्य इति दर्शनोत्सुकाः
विस्मृतान्यकरणीयमानसाः ॥ ९४ ॥

रक्षसां च सवनौकसामभूत्
संयुगो विटपिशस्त्रयोधिनाम् ।
उग्रबाहुबलिनां रदारदि
प्रोद्बभूवुरसृगापगा यतः ॥ ९५ ॥

रावणप्रहितपत्त्रिणो द्रुतं
राघवोरसि सपुङ्खमाविशन् ।
सेवकार्पितजलादिकं विभोः
सर्वमेव हृदयंगमं यतः ॥ ९६ ॥

आश्रवः समवकृष्य कार्मुकं
राघवोऽपि शितबाणमाक्षिपत् ।
आनिपीय रुधिरं सहासुभि-
र्वक्षसोऽस्य समगात् स बाणधिम् ॥९७॥

वर्ष्मणोऽस्य पततः समुत्थितं
पश्यतां दिविषदां पुरो महः ।
खे भ्रमद्रघुवरस्य विग्रहे
विग्रहे ग्रह इवाविशद्द्रुतम् ॥ ९८ ॥

पुष्पवृष्टिरभवद्दिवौकसां
हस्तपद्मनिकरार्पिता दिवः ।
रामचन्द्रशिरसि प्रमोदिनां
साधु साधु वदतामिति स्फुटम् ॥ ९९ ॥

एकदैव परिणेदुरम्बरे
देवदुन्दुभिगणाः सुताडिताः ।
ताण्डवेन सुरवारयोषितां
सार्धमाशु पवनाः सुखा ववुः ॥ १०० ॥

निर्जरा विधिमुखाः समागमन्
व्योमयाननिचयैर्विलोकितुम् ।
चापबाणधरमुल्लसद्भ्रुवं
राममाहवगतं मनोहरम् ॥ १०१ ॥

वेधसा विबुधराजमुख्यकै-
र्दैवतैः सह समेत्य सत्वरम् ।
तं प्रणम्य विदधे स्तुतिः परा
वेदवृन्दविहिता विधानतः ॥ १०२ ॥

तत्त्वाधारः कायभिन्नस्त्र्यवस्था
साक्षी मायाभेद्यजीवेश्वराभ्याम् ।
भिन्नः कोशातीत एवासि साक्षात्
सीताजाने सच्चिदानन्दरूपः ॥ १०३ ॥

धेनुर्भूत्वा भूमिरागान्मदीयं
लोकं तस्याः प्रेरणात्प्रार्थितः सन् ।
भाराक्रान्ता भारहाराय भारं
हर्त्तुं भानोरन्वयेऽजायताजः ॥ १०४ ॥

मत्स्यो भूत्वा कश्यपस्याञ्जलौ त्वं
पातं कृत्वा खान्महत्वं गतोऽसि ।
शङ्खं हत्वा सागरे शीर्णवेदा-
नादायादाः मह्यमादौ युगान्ते ॥ १०५ ॥
कूर्मेणादौ मन्दरं पृष्ठदेशे
धृत्वा देवैर्दानवैर्मथ्यमानात् ।
क्षीराब्धेरुद्धूतपीयूषपानं
सर्वे देवाः कारिता नेतरे च ॥ १०६ ॥
आदौ क्रोडीभूय भूमन्नधस्तात्
धृत्वा भूमिं दंष्ट्रया दैत्यराजम् ।
हत्वा पद्मीवोज्जहाराम्बुजिन्याः
पत्रं श्रीमन् क्रीडितं ते न यत्नः ॥ १०७ ॥
रूपं बिभ्रन्नारसिंहं नृसिंह
वक्षःक्षेत्रं लाङ्गलाग्रैर्नखाग्रैः ।
भित्त्वा देवारातिराजस्य काष्ठात्
प्रह्लादं तं त्रायते स्म प्रभूय ॥ १०८ ॥
भूत्वा मायावामनोऽवामनोऽपि
याञ्च्याव्याजाद्भूमिपादत्रयस्य ।
राज्यं हृत्वाऽदान्मघोने समस्तं
संस्थाप्याधो राम वैरोचनिं तम् ॥१०९॥

रामेणाजौ जामदग्न्येन राम
क्षोणीयं निःक्षत्रियाऽकारि सर्वा ।
तीर्थे गत्वा तर्पिताः पूर्वजाताः
कुण्डेष्वस्तैः सप्तकृत्वस्त्रिरस्त्रैः ॥ ११० ॥

अग्रे कर्तासीह कर्माणि भूयो
गण्यन्ते कैस्तानि च त्वत्कृतानि ।
वक्तुं वेदा यानि शेकुर्न साक्षात्
मूर्ध्ना पादौ ते नमामीश भूयः ॥ १११ ॥

इत्थं स्तोत्रं वेधसोऽसौ निशम्य
दृष्ट्वा तातं चागतं तं प्रणम्य ।
आह स्मेदं वायुसूनुं त्वमेव
गत्वा सीतामानयास्मत्सकाशम् ॥ ११२ ॥

दृष्ट्वानीतां मातरिश्वात्मजेन
रामश्चख्यौ जानकीं जातहर्षः ।
वह्निं कीशैर्ज्वालयित्वेति सेयं
दिव्यं दद्याद्देवतानां पुरस्तात् ॥ ११३ ॥

दिव्यव्याजाद्वीतिहोत्रे प्रविष्टां
सत्यां सीतां तामिहादातुकामा ।
मायासीता प्राविशत् प्राकृतेव
सत्या भूत्वाविर्बभूवाथ तस्मात् ॥ ११४ ॥

शुद्धा शुद्धेत्यादितेया वदन्तो
दृष्ट्वा सीतां तां शशंसुश्च रामः ।
तस्यै प्रादाद्भूषणानि प्रियायै
सुग्रीवेणानाय्य यानि स्थितानि ॥ ११५ ॥

भ्रातृद्वारा राघवो रावणस्य
कर्मौचित्यं कारयित्वा सखायम् ।
लङ्काराज्ये स्थापयामास भूयः
सेवा श्रेष्ठे निष्फला नैव यस्मात् ॥ ११६ ॥

देवान् सर्वान् ब्रह्ममुख्यान् प्रयाप्य
स्वं स्वं लोकं पुष्पकं व्योमयानम् ।
लङ्केशेनानाय्य सीतासमेतो
रामः सैन्यैश्चानुजेनाध्यरोहत् ॥ ११७ ॥

रामादेशादुत्तरस्यां दिशायाम्
आकाशस्थं पुष्पकं तज्जगाम ।
प्राह स्मालं रामचन्द्रः प्रियां तां
पश्याब्धिं त्वं यत्र सेतुर्निबद्धः ॥११८॥

पश्यार्ये त्वं वानराणामियं पूः
किष्किन्धाख्या यत्र हत्वेन्द्रसूनुम् ।
सख्ये राज्यं दत्तमर्कात्मजाय
यातो यस्या आञ्जनेयस्त्वदर्थम् ॥ ११९ ॥

सीते श्रेयानृष्यमूकोऽयमद्रि-

र्यस्मिन्भूषामाक्षिपः कीशमध्ये ।

तां प्रेक्ष्यैव प्रस्फुटत्स्वान्तलक्ष्ये

कामो बाणान् प्राहिणोन्मे मनोज्ञे ॥१२०॥

एषा पम्पा सुभ्रु शम्पाप्रकाशे

यत्र प्रत्तं बादरं मे शबर्या ।

गोदा चैषा मोददा मोदमाना

यस्यामासीः पञ्चवट्याः समीपे ॥१२१॥

सीते तस्यैवाश्रमोऽयं ह्यखेदो

ऽभूवं यस्मात् प्राप्य चापं सतूणम् ।

येनापीतः सिन्धुनाथः समस्तो

यं नत्वाहं पूर्णचन्द्राननाभे ॥ १२२ ॥

वैदेह्यत्रेराश्रमो यत्र तुष्ट्या

तत्पत्न्या तेऽदायि वस्त्राङ्गरागम् ।

बाले दूराद्भासते चित्रकूटो

यत्र भ्राता मध्यमोऽगान्मदर्थम् ॥ १२३ ॥

वाल्मीकेस्त्वं पश्य रम्योटजं वै

मित्रं योऽयं काव्यकर्त्ता पितुस्ते ।

पश्येदानीं तीर्थराजं प्रयागं

न्यग्रोधोऽस्मिन् श्याम आस्ते सुनेत्रे॥१२४॥

पारेगङ्गं शृङ्गवेरं सुरम्यं
पश्येदानीं यत्र नैषादराजः ।
नैयग्रोधं क्षीरमाहार्य वर्ये
चक्रे शीर्षं मामकीनं जटालम् ॥ १२५ ॥

स्थित्वा तस्मिन् प्रेषयामास वायोः
पुत्रं भ्रात्रे मध्यमायाऽथ रामः ।
कैकेय्यास्तं पुत्रमानन्दयुक्तं
चक्रे कीशो वार्त्तया रावणारेः ॥ १२६ ॥

श्रुत्वा वचो हनुमतो भरतस्तदानी-
मुत्थाय शालिरिव वृष्टिमवाप्य खिन्नः ।
आलिङ्ग्य तेन रभसात्तरसोरसा च
प्राप प्रहर्षमतुलं रघुकेतुनेव ॥ १२७ ॥

प्रत्युज्जगाम सह सैन्यपुरोहिताद्यैः
रामं चिरागतमतो भरतः पदेन ।
रामोऽपि वीक्ष्य सविधागतमात्मबन्धुं
ब्रह्मात्मजेन जननीभिरथोच्चचाल ॥१२८॥

नत्वा गुरुं च जननीश्चरणारविन्दे
बन्धू गतौ समवलोक्य रघुप्रवीरः ।
उत्थाप्य बाहुयुगलेन समालिलिङ्ग
प्राघ्राय मौलिमुरसा शरचिह्नितेन ॥१२९॥

दूरीचकार भरतोऽप्ययशो जनन्याः
शीलेन शुद्धतपसा च निसर्गजेन ।
सौभ्रात्रकेण सहजप्रभयैव कीर्त्या
मूल्येन जातिवरवज्र इवाकरस्य ॥ १३० ॥

सौमित्रिणापि भरतस्य पदं ववन्दे
मातुर्विमातृयुगलस्य गुरोश्च भूम्ना ।
सौमित्रिणास्य सहजस्य च पादपद्मं
सुत्रामजिद्धतवतः शिरसा नतेन ॥ १३१ ॥

ऋक्षाधिपेन सकपीशबिभीषणेन
रामोदितौ भरतशत्रुहणौ प्रवीणौ ।
आलिङ्गतः स्म सह वालिसुतेन चान्यै-
र्नीलादिभिर्मनुजवेषधरैः प्लवङ्गैः ॥ १३२ ॥

रामप्रियाऽपि रघुवंशमणेर्निदेशात्
श्वश्रूपदाब्जनिचयं सहसा ववन्दे ।
वीरप्रसूर्जनकराजसुते भवेति
ताभ्यो वराशिषमवाप्य मुमोद सेयम् ॥ १३३ ॥

अन्तावसायिकुशलैः रघुवंशकेतुः
सभ्रातृकः समवतार्य जटाकलापम् ।
चिक्षेप गाङ्गसलिले सहसा ममज्ज
श्रेष्ठास्पदच्युतिसलज्जतयेव किं सः ॥ १३४ ॥

भूषाम्बराणि कपिभल्लकराक्षसानां
　　भूपैः समं परिदधौ कपिभिश्च रामः ।
सभ्रातृकश्च सह तैर्विरराज कामं
　　तारागणैरुडुपतिर्वियतीव पूर्णः ॥ १३५ ॥

आरूढनागतुरगादिकवाहनैस्तै-
　　र्भूषाम्बरावृतवपुर्भिरसौ जगाम ।
माङ्गल्यसूचिकलशध्वजतोरणाङ्कां
　　स्वीयां पुरीं सलिलसेकनिवृत्तधूलिम् ॥१३६॥

गीतैः कलैश्च मधुरस्वरगायकानां
　　ढक्कामृदङ्गपणवानकगोमुखानाम् ।
शब्दैर्दिगन्तरगतैर्गजवाजिनादै-
　　र्हस्तप्रचालनविबोधिजनप्रचाराम् ॥१३७॥

तीर्थोदकैर्विधिसुतादिभिरार्य्यविप्रैः
　　संहारितैः कपिवरैर्विहिताभिषेकः ।
रामो विदेहसुतया सहितो विदेहो
　　भद्रासने वनितयेव बभौ सहायम् ॥१३८॥

छत्रं बभार भरतो रजनीकराभं
　　सौमित्रिकौ जगृहतुः सितचामरे सः ।
धर्मार्थकामविहितानुचरत्वमोक्षो
　　देहीव भाति रघुवंशमणिः स्म तत्र ॥१३९॥

राजाधिराजरघुवंशमणेः सकाशा-
  ल्लब्धोरुमानपरिजातमहाप्रसादाः ।
क्लेशाद्ययुर्निजपुराणि बिभीषणाद्याः
  आज्ञा हि तस्य वशवर्तिजनैरलङ्घ्या॥१४०॥

आहूय मारुतिमवोचदसौ हनूमन्
  कर्मेदृशं यदकरोर्न कृतं त्वदन्यैः ।
तस्मात्त्वमत्र वस जीव चिराय कामं
  दत्ताशिषेति सह तं विससर्ज रामः ॥१४१॥

रामे प्रशासति महीं न बभूवुरन्धा
  न श्रोणपृश्निबधिरा न च दण्डनीयाः ।
नाकालमृत्युवशगा न जडा न षण्ढा
  नावग्रहादिविपदः श्रवणे स्थितास्ते॥१४२॥

गावस्त्वनल्पपयसः फलिताश्च वृक्षाः
  शस्यानि पक्त्रिमफलानि विनापि कृष्टिम् ।
वर्णाश्रमा व्यसनतो विरता रताश्च
  धर्मे बभूवुरवनीं परिपाति रामे ॥ १४३ ॥

सन्तोषिता वरमखैरमरा द्विजाताः
  दानैर्नयैररिगणा रघुनायकेन ।
लुब्धा धनैर्मुनिगणाः परमादरेण
  बुद्ध्या बुधा गुरुजना नमनेन तेन ॥१४४॥

यत्पादाम्बुजसंभवा भगवती गङ्गा पुनाना जगत्
पाथोधिं सजलं चकार सकलं पीतो मुनीन्द्रेण यः।
यत्पादाब्जनिषेवणाद् ध्रुवपदं प्रापद् ध्रुवो बालकः
तस्य श्रीरघुनायकस्य चरणाम्भोजे भजे भावतः ॥१४५॥

येषां धियः स्वपरभेदविदां विदध्यु-
नैवानिमित्तसुहृदो न च दुर्हृदो ये।
पश्यन्तु ते कृतिमिमां कृपया हि सन्तः
श्रीरामकीर्तिरतिकल्पलतोपमेति ॥ १४६ ॥

इति श्रीरामविजये महाकाव्ये श्र्यङ्के श्रीरूपनाथोपाध्याय-
कृतौ श्रीरामाधिरूढसिंहासनो नाम नवमः सर्गः ॥ ९ ॥

इति श्रीरामविजयं नाम महाकाव्यम्

॥ समाप्तम् ॥



# शुद्धिपत्रम् ।

| पृष्ठे | श्लोकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ५ | अलङ्घ्या लङ्घ्या | अलङ्घ्याऽलङ्घ्या |
| २ | ५ | कलापूर्णैः | कलापूर्णैः |
| २ | ७ | रज्वा | रज्ज्वा |
| २ | ८ | प्यति वरैः | प्यतिवरैः |
| २ | ८ | सुधालिप्तैरत्ना | सुधालिप्तै रत्ना |
| ३ | १० | स्फुरद्रत्नोरत्नो | स्फुरद्रत्नो रत्नो |
| ३ | ११ | गभीराभीराभिः | गभीरा भीराभैः |
| ४ | १६ | नाथानाथारु | नाथा नाथा रु |
| ५ | २० | भीतजनकैः | भीतिजनकैः |
| ५ | २१ | सुमनःस्सात्कृतभुवः | सुमनस्सात्कृतभुवः |
| ५ | २४ | साथ | स्माथ |
| ६ | २६ | यदि | प्रति |
| ६ | २७ | महिम्नाहिम्नातो | महिम्ना हि म्नातो |
| ६ | २८ | नागेत्य | नागेऽत्य |
| ७ | ३१ | तरत्नो रत्नोभो | तरत्नोरत्नोभो |
| ७ | ३२ | श्चास्यप्रथित | श्चास्य प्रथित |
| ७ | ३२ | श्चावित्सद्दृश | श्चावित्सद्दृश |
| ८ | ३६ | वन्देनोज्झित | वन्देनोज्झित |
| ८ | ३६ | थोपादः | थो पादः |
| ८ | ३७ | गंमोमापित्रोर्मानय | गंमो मा पित्रोर्मा नय |
| ११ | ५३ | गुरूक्तं | गुरूक्तो |

| पृष्ठे | श्लोकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | ५६ | सलिलपात्रं | सलिलयात्रं |
| १५ | १ | श्रितोच्चगै | श्रितोच्चतै |
| १५ | ३ | दशनवस्त्रमण्डनः | दशनवस्त्रमण्डलः |
| १५ | ७ | गौरकान्तिसुतयोः | गौरकान्ति सुतयोः |
| १६ | ४७ | मुनीरितिस्त्विति | मुनीरितस्त्विति |
| २० | ५४ | सम्भृतोपकरण-प्रयोगिभिः | सम्भृतोपकरणः प्रयोगिभिः |
| २१ | ६२ | समुदा | स मुदा |
| २१ | ६३ | दत्तिपाद | दत्तपाद |
| २२ | ६६ | क्षिताक्षि | क्षितक्षि |
| २२ | ७५ | पुरात्विमौ | पुरा त्विमौ |
| २२ | ७६ | प्रोत्सुकेन | प्रौत्सुकेन |
| २२ | ७७ | ज्यानिरूढ | ज्याधिरूढ |
| २६ | ५ | उल्कानि पेतुः | उल्का निपेतुः |
| २७ | ६ | दुर्निरीक्षः | दुर्निरीक्ष्यः |
| २७ | १० | समयूयुजच्च | समपूपुजच्च |
| ३५ | ११ | भवितासे | भविता श्वो |
| ३५ | १२ | किं तु | किं नु |
| ३५ | १७ | पुरुषोत्तम | पूरुषोत्तम |
| ३६ | ५६ | वधूरययाचत् | वधूस्तमयाचत् |
| ४४ | ६६ | सह गुहेन | सगुहेन |
| ४८ | १२ | विपरीतो | विपरीता |
| ४६ | २५ | न्वऽगाः | न्वगाः |
| ५४ | ३ | उटजं मुनेः | उटजं स मुनेः |
| ५४ | ५ | अनुसूयया | अनसूयया |

| पृष्ठे | श्लोकम् | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ५४ | ६ | अनुसूयया | अनसूयया |
| ५६ | २३ | आसरगणं | आशरगणं |
| ५८ | ३६ | धनुस्तनशरे | धनुस्त्वनशरे |
| ६१ | ४६ | भवतोनु | भवतो नु |
| ६२ | ५५ | दूषिताऽस | दूषिताऽऽस |
| ६३ | ६० | राघवः समुदीर्य | राघवः स समुदीर्य |
| ६४ | ६६ | सुरोघै | सुरौघै |
| ८२ | ३१ | मर्पितम् | मप्पतिम् |
| ८२ | ३१ | त अभिवीक्ष्य | तमभिवीक्ष्य |
| ६३ | १७ | तं चानिनाय | तत्रानिनाय्य |
| ६३ | १७ | आधिपत्य अधि | आधिपत्यमधि |
| ६६ | ४६ | पराग्रैः | पदाग्रैः |
| १०३ | ६८ | स मां | स तु मां |
| ११० | १०२ | दैंवतैः | दैंवतैः |



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)—The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6—(Part II)—Ditto Ditto Rs. 0-12

No. 7—(Part I)—The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—(Part II) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya.
Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya.
Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 15-( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt.
Rs. 0-14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1–0

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares. Rs. 2–0

No. 24–The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Pañchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28-The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I)-The Tantraratna by Pártha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad Rs. 1-14

No. 32-The Tattvasāra by Rākhāldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University.

No. 33-The Nyaya Kaustubha (Part I) by Mahadeva Puntamkar.
Edited with Introduction etc by Umes'a Miśra, M. A., Allahabad University, Allahabad.

No. 34-( Part I )The Advaita Vidyātilakam by S'rī Samarapuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita. Edited with Introduction, etc, by Ganapati Lal Jha M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35-The Dharma Vijaya Nāṭaka by Bhūdeva S'ukla. Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36-The Ananda Kanda Champu, by Mitra Misra. Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares.

No. 37-The Upanidāna Sutra. Edited with Introduction by Dr. Mangaldeva S'āstri.

No 38-The Kiraṇāvali prakās'a didhiti ( Guṇa ), by Raghunāth Siromani. Edited by Pt. Badrināth Sāstri, M. A., Lucknow University

No. 39-The Rama Vijaya Mahākavya, by Rupanātha. Edited by Pt. Ganapatilal Jha, M. A.

Vol. VII.

(a) Bhāmaha and his Kāvyālankāra, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'âstri.

(e) Mysticison in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmatha Nātha Roy

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.